# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १



**प्रकाशसंहिता**
अध्यायः १
[[लेखकः :|]]



---

अथ प्रथमोऽध्यायः

सर्वलोकेश्वरो विष्णुः सृष्ट्याद्यष्टकृदीश्वरः ।
यथा ससर्ज निखिलं तन्मे ब्रूहि जगद्गुरो ।। १.१ ।।

श्रीहंस उवाच

नारायणोऽनन्तशक्तिः पूर्णानन्दोऽक्षरः स्वराट् ।
ज्ञनानन्दात्मकानन्ततनुरासीदिति श्रुतिः ।। १.२ ।।

तस्य स्वतन्त्रस्य हरेः साकल्येन महात्मनः ।
स्वरूपं नैव जानन्ति रमाब्रह्मादयोपि तु ।। १.३ ।।

तथापि ते प्रवक्ष्यामि यथा जानासि तत्वतः ।
पूर्णकामस्य तस्यास्य सृष्ट्याद्यैर्न प्रयोजनं ।। १.४ ।।

स्वभावस्तादृशस्तस्य तदर्थं तत्करोत्यजः ।
स एव भगवानात्मा चराचरनियामकः ।। १.५ ।।

अण्डमावरणान्सर्वान्प्राकृतान्पुरुषोत्तमः ।
सङ्कर्षणो नृसिंहेन रूपेणाग्रसदीश्वरः ।। १.६ ।।

ततः सर्वान्पूर्वकल्पमुक्तान्बद्धांश्च चेतनान् ।
स्वोदरे स्थाप्य भगवान्स्वप्रकाशोऽस्वपत्सुखी ।। १.७ ।।

दशावरणसंयुक्तब्रम्हाण्डस्य स्तिथौ मितिः ।

यावत्प्रदेशस्तत्तुल्यरूपा श्रीरुदरूपिणी ।। १.८ ।।

तावद्रूपवती भूमिः वटपत्राभवत्पुरा ।
दुर्गा तावत्परिमिता अन्धकारस्वरूपिणी ।। १.९ ।।

तदा रमाविना कश्चिन्नान्यदासीद्बहिस्थले ।
शून्यनाम्नः शिशोर्गर्भे सर्वे जीवास्तदावसन् ।। १.१० ।।

तदूर्ध्वकुक्षिगा मुक्ताः प्रभवन्ति महालये ।
मुक्तियोग्या मध्यकुक्षौ नित्यबद्धास्तु नभितः ।। १.११ ।।

अधोसुराः कटितटे प्राप्तदुःखास्तदूर्ध्वगाः ।
वसन्ति क्ळप्तानन्दस्ते मुक्ता भुञ्जन्ति नेतराः ।। १.१२ ।।

प्राप्तव्यान्प्रलयेनैव तेषां दास्यति माधवः ।
हित्वा प्राप्तव्यमानन्दं क्ळप्तानन्दैकभोजिनां ।। १.१३ ।।

वैकुण्ठादि विहारञ्च हित्वा गर्भस्थितिर्हरेः ।
प्रलये सर्वमुक्तानां नाश इत्युच्यतेब्जज ।। १.१४ ।।

सुखदुःखादि भोगार्हाः इच्छाज्ञानस्वरूपिणः ।
द्वेषधर्माधर्मयत्ननिरता जीवराशयः ।। १.१५ ।।

लिङ्गबद्धाः समस्ताश्च सृष्टौ जीवाश्चरन्ति हि ।
साम्यावस्थामुपगताः लिङ्गदेह समन्विताः ।। १.१६ ।।

लये वसन्तीशगर्भे पूर्वशक्तिस्तदानहि ।
तदासर्वे गाढनिद्रामुपगच्छन्ति तादृशाः ।। १.१७ ।।

लय इत्युच्यते सद्भिः न लयोस्ति स्वरूपतः ।
सर्वजीवस्वरूपस्थाः ज्ञानव्यञ्जनशक्तयः ।। १.१८ ।।

मनोवृत्तिज्ञानदानशक्तिर्याश्रुतेर्मता ।
लयेजीवाद्यभावेन सा शक्तिः कुण्ठिता भवेथ् ।। १.१९ ।।

व्याप्तेश्वरमतिस्थानां श्रुतीनां तादृशो लयः ।
अण्डादिजडजीवानां व्योमाव्याकृतसंज्ञकं ।। १.२० ।।

आश्रयं सृष्टिकालेतत्प्रलये कुण्ठितं भवेत् ।
देशस्याव्याकृतस्यास्य नाश इत्युच्यते लये ।। १.२१ ।।

समस्त लिङ्गदेहानां तत्तत्कर्मानुसारतः ।
नानायोनि प्रापिकास्ति शक्तिः सृष्टौ लये न तु ।। १.२२ ।।

सुखदुःखप्रदाशक्तिः समस्तकृतकर्मणां ।
सृष्टौ लये न सा विष्णोराज्ञया कुण्ठिता भवेथ् ।। १.२३ ।।

तादृशो हि लयस्तस्य न स्वरूपलयस्मृतः ।
वर्णेषु सर्वभाषाभिव्यञ्जका शक्तिरिष्यते ।। १.२४ ।।

सृष्टौ न सास्ति प्रलये तेषां नाशो हि तादृशः ।
तमः स्थानां पूर्वक्ळप्तदुःखभोगो लयः स्मृतः ।। १.२५ ।।

प्रकृत्यात्मकलिङ्गस्य जडायाः प्रकृतेस्तथा ।
सूक्ष्माणां स्थूलकत्वानां त्रिगुणस्यापि कृत्स्नशः ।। १.२६ ।।

स्रष्टृत्वशक्तिः सृष्टौ हि न लये स्यत्ततो लयः ।
हित्वा जगत्सर्जनाद्यं सर्वदा श्रीपतौ रतिः ।। १.२७ ।।

अतिसामीप्यसेवा हि लयो लक्ष्म्याः प्रकीर्तितः ।
अनित्यस्याचेतनस्य अण्डान्तर्बहिरेव वा ।। १.२८ ।।

क्रमात्सङ्कर्षणाग्नेस्तु दाहो नाश उदहृतः ।
देशतः कालतो व्याप्ता वर्णासर्वेपि शाश्वताः ।। १.२९ ।।

जडा च प्रकृतिर्नित्या जडरूपाणुरेव च ।
देशतः कालतो व्याप्ताचिद्रूपाः श्रीहरेःःसदा ।। १.३० ।।

अनन्तगुणतो नीचा गुणतोऽनन्तरिश्वरे ।
लये समाश्रिताःसर्वे वसन्ति क्षीणशक्तयः ।। १.३१ ।।

सम्पूर्णशक्ते भगवत्यनन्ते देशकालतः ।
परमाणुमितानन्तानन्तरूपः सदा हरिः ।। १.३२ ।।

तदभिन्नानन्तसूक्ष्मस्थूलरूपो हरिः परः ।
समस्तजीवरूपोरुसूक्ष्मस्थूलस्वरूपकः ।। १.३३ ।।

समस्तजडरूपानन्तानन्तरूपो जगद्गुरुः ।
अनन्तानन्तरपैरप्यभिन्नो निर्गुणो हरिः ।। १.३४ ।।

सर्वतः पाणिपादात्मा सर्वतोऽक्षिशिरोमुखः ।
सर्वत्र सर्वेन्द्रियावान्सर्वमावृत्य तिष्ठति ।। १.३५ ।।

अप्राकृतेन्द्रियानन्तरूपकः परमाद्भुतः ।
असङ्गः सर्वविच्चैव निर्गुणो गुणपूरितः ।। १.३६ ।।

बहिरन्तश्च भूतानां अचरश्चर एव च ।
अव्यक्तोव्यक्तरूपश्च साधुःसत्साक्षिगोचरः ।। १.३७ ।।

एकोप्यनेकवद्भाति नित्यसत्यो महासुखः ।
अनन्तवेदगम्यश्च सृष्ट्याद्यष्टकृदीश्वरः ।। १.३८ ।।

स्वतन्त्रोवर्णनीयोरुरुपानन्तस्तु चित्तनुः ।
स्वानन्तानन्तचिन्मात्रदेहमध्यैकदेशगः ।। १.३९ ।।

योगनिद्रामुपगतो विनिद्रोऽस्वपदीश्वरः ।
अण्डस्यावरणस्योपचयं दग्ध्वा लये हरिः ।। १.४० ।।

उपादानं प्रकृत्यैकीभूतं कृत्वा नृकेसरी ।
अनिरुद्धादि मुखगं सङ्कर्षण नृसिंहतः ।। १.४१ ।।

सर्वसूक्ष्मशरीरोपचयं दग्ध्वाखिलेश्वरः ।
तदुपादानभूतानि लिङ्गैरेकीकरोत्यजः ।। १.४२ ।।

तदास्तरणरूपाभूः श्रीर्भार्यारूपिणी परा ।
दुर्गा प्रावरणाकारा हरेरमिततेजसः ।। १.४३ ।।

स्वानेव सुगुणान्भुञ्जनसुप्ताभूत्सुसुप्तवत् ।
मुक्ताभुक्तोदरो विष्णुः अनन्तानन्तभानुरुक् ।। १.४४ ।।

स्वप्रकाशोस्वपद्योगनिद्रयावटपत्रगः ।

सृष्टिकाले सर्वजीवाः नानादुःखसमाकुलाः ।। १.४५ ।।

भ्रमन्ति सर्वजीवानां तत्तच्छ्रमनिवृत्तये ।
लये स्वापं प्रापयति लिङ्गबद्धान्स्वदेहगान् ।। १.४६ ।।

अनादियोग्ताकर्मभावाज्ञानाकुलान्बहून् ।
सृज्यान्विलक्षणान्तारतम्यस्थान्त्रिविधात्मकान् ।। १.४७ ।।

स्वल्पनिद्रान्महानिद्रान्गढनिद्रासमन्वितान् ।
चिन्मात्रानन्दभुङ्क्तान्सदा दुःखभुजोऽसुरान् ।। १.४८ ।।

तमःसंस्थान्सदा बद्धान्जठरे स्थाप्य केशवः ।
वटपत्रे स्वपद्देवो निद्रामाचरतीव सः ।। १.४९ ।।

तेषु सृज्यान्स्वयं सृष्ट्वा यथायोग्यफलं विभुः ।
सुखं मिश्रं तथा दुःखं दातुमैच्छल्लयान्तिमे ।। १.५० ।।

लयास्यष्टमो भागो लयान्तिम उदाहृतः ।
लये समालिङ्ग्य हरिं विनिद्रा परमेश्वरी ।। १.५१ ।।

निद्रिते वा सदानन्दवारिधिं समुपाश्रिता ।
लयष्टमांशे श्रीदेवी अस्वतन्त्रा स्वतन्त्रतः ।। १.५२ ।।

प्रबुद्धाचाज्ञया विष्णोः स्तोतुं समुपचक्रमे ।
देशतः कालतोऽनन्ता गुणानन्त्यविवर्जिता ।। १.५३ ।।

ब्रह्मवाय्वोः कोटिगुणैः अधिका विष्णुवल्लभा ।
लये सृष्टौ सर्वनित्यपदार्थेष्वभिमानिनी ।। १.५४ ।।

सृष्ट्याद्यष्टकरी विष्णोः आज्ञयानन्तरूपिणी ।
छायेव सूक्ष्मस्थूलोरु रूपं विष्णुं समाश्रिता ।। १.५५ ।।

विष्णोरनन्तवेदेषु प्रोक्तान्तदधिकानपि ।
गुणान्संजानती साक्षात्सर्ववेदाभिमानिनी ।। १.५६ ।।

अवर्णणीयसौन्दर्या सर्वजीवाभिमानिनी ।
शुभ्रेषु मुक्तियोग्येषु शुभ्रा (मुक्ता) श्रीरभिमानिनी ।। १.५७ ।।

रक्तेषु सर्वबद्धेषु रक्ताभूरभिमानिनी ।
नीलेष्वयोग्यजीवेषु नीला दुर्गाभिमानिनी ।। १.५८ ।।

प्रकृति प्रकृतौ साम्यवैषम्यादि प्रवर्तका ।
अछिन्ना भगवद्भक्ता जडेषु जडरूपिणी ।। १.५९ ।।

चित्सुचिद्रूपिणी स्त्रीषु स्त्रीचेष्टादि प्रवर्तका ।
पुरुषाकृतिरुत्कृष्टा पुंभावपरिवर्जिता ।। १.६० ।।

अव्यक्ततत्कार्यमय देहशून्या तथाविधा ।
स्वयं श्रीः विष्णुभावज्ञा वेदैस्तुष्टाव वेदवित् ।। १.६१ ।।

ते वेदाः ऋग्यजुःसामाथर्वणाः श्रीहरेर्वशाः ।
चत्वारोपि पृथग्जात्या अनन्ता दोषवर्जिताः ।। १.६२ ।।

उदात्तादि स्वरार्थादि वर्णक्रमसमागमाः ।
विसर्गबिन्दुपूर्वोरुशब्दयोग्यगुणोच्चयैः ।। १.६३ ।।

अनन्तकालमरभ्यरिषद्वेत्यासवर्जिताः ।
सांशा समस्तदेशेषु व्याप्ताः शुद्धजडाः सदा ।। १.६४ ।।

गुणाख्यानपरा विष्णोः शब्ददोषविवर्जिताः ।
ज्ञतज्ञापकता तेषु विपरीतार्थवक्तृता ।। १.६५ ।।

अस्पष्टत्वादयस्तेषु वाददोषानसन्त्यलं ।
ध्वनिरूपा सृष्टिकाले वाक्स्था वाग्देवतावशाः ।। १.६६ ।।

लये लक्ष्मीवशाः सृष्टौ ब्रह्माद्यैरभिमानिभिः ।
रक्षिताः प्रलये सृष्टावेकरूपा भवन्ति हि ।। १.६७ ।।

अनन्तानन्तसंख्याताः विष्णोः ज्ञाने च साधकाः ।
सर्वदेशगतानन्ता कण्ठस्थास्तस्य शार्ङ्गिणः ।। १.६८ ।।

कण्ठेनोद्गीयमनास्ते जीवानां योग्यतावशात् ।
तत्तत्स्वरूपविज्ञानव्यञ्जकाः श्रीहरीच्छया ।। १.६९ ।।

वृत्तिज्ञानोत्पादशौण्डाः अ(योग्या)थाज्ञानाममबोधकाः ।
शब्दरूपाःसाक्षियुक्तमनः श्रोत्रैकगोचराः ।। १.७० ।।

सर्वशब्दात्मकहरेः बिम्बस्य प्रतिबिम्बकाः ।
शब्दरूपा वेदगता दुर्गा सानन्तरूपिणी ।। १.७१ ।।

पुरुषोद्बोधितुं ज्ञात्वा तुष्टाव पुरुषं परं ।
अनन्तात्मानन्तशक्तिः ओं(आ)कारादि श्रुतिव्रजान् ।। १.७२ ।।

नित्यान्सव्यञ्जयन्तेषां सृष्टौ दुर्गामुपादिशत् ।
प्रलयस्याष्टमे भागे वेदस्रष्टुर्जगत्पतेः ।। १.७३ ।।

ओं(अ)कारः प्रथमो व्यक्तो बभूव भगवन्मयः ।
ॐआनादबिन्दू च घोषशान्तातिशान्तकाः ।। १.७४ ।।

यत्स्वरूपाश्च विश्वाद्याः यद्वाच्या यद्गताः पराः ।
ओङ्कारवाच्यः पुरुषः पुत्रास्ते नित्यचिन्मयाः ।। १.७५ ।।

ते विश्वतैजसप्राज्ञतुर्यात्मान्तरात्मनां ।
परमात्मज्ञानात्मकानां रूपाणां वाचका हरेः ।। १.७६ ।।

तारप्रणवशब्दाभ्यां वाच्य ओङ्काररिरितः ।
नारायणाष्टाक्षराख्यः तरगर्भाक्षरैरभूथ् ।। १.७७ ।।

अभिव्यक्तोथ विश्वादिर्व्यक्तविश्वादयोखिलाः ।
नारायणमनोर्वाच्याः देवताः परिकीर्तिताः ।। १.७८ ।।

तारगर्भाक्षरैराद्यैश्चतुर्भिरभवन्मनुः ।
व्याहृत्याख्योऽनिरुद्धाद्याः विश्वाद्युत्था तदीरिताः ।। १.७९ ।।

तारगर्भाक्षरैर्व्यक्ताः वर्णाः पञ्चाशदीरिताः ।
अकौचटौतपौ तद्वद्यशौ अष्टा उदाहृताः ।। १.८० ।।

अष्टवर्णाः अकारोत्थाः अचः षोडशसंमताः ।
पञ्चवर्णाः कवर्गस्य उकारोत्थाः प्रकीर्तिताः ।। १.८१ ।।

मकारोत्थाश्चवर्गस्य पञ्चवर्णाः प्रकीर्तिताः ।

टवर्गपञ्चवर्णास्तु नादोत्था इति संमताः ।। १.८२ ।।

पञ्चवर्णास्तवर्गस्य बिन्दुव्यक्ता उदाहृताः ।
पवर्गपञ्चवर्णास्तु घोषतः सम्भवन्ति हि ।। १.८३ ।।

यवर्गस्य चतुर्वर्णाः व्यक्तिं यास्यन्ति शान्तितः ।
अतिशान्ताच्छवर्गस्य पञ्चवर्णाःसमुत्थिताः ।। १.८४ ।।

कषयोगादभिव्यक्तः क्षोप्यन्योक्षर उच्यते ।
पञ्चाशतान्तुवर्णानां तारवर्णाष्ट दैवतैः ।। १.८५ ।।

विश्वादिभिः क्रमाद्व्यक्ताः अजाद्या देवतामताः ।
अज आनन्द इन्द्रेश उग्र ऊर्ज ऋतम्भरः ।। १.८६ ।।

ॠघःऌशौ ॡजिरेकात्मैर ओजोभृदौरसः ।
अन्तोर्धगर्भः कपिलः खपतिर्गरुडासनः ।। १.८७ ।।

घर्मोङ्गसारश्चार्वङ्गश्छन्दोगम्यो जनार्दनः ।
झडितारिञमष्टङ्की ठलको डरको ढरी ।। १.८८ ।।

णात्मातारस्थपोदण्डी धन्वी नम्यः परः फली ।
बलिर्भगोमनुर्यज्ञो रामो लक्षीपतिर्वरः ।। १.८९ ।।

शान्तसंवित्षड्गुणश्च सारात्मा हंसलालुकौ ।
अकाराद्यैःसर्ववर्णैर्वाच्या एते प्रकीर्तिताः ।। १.९० ।।

क्षवाच्यो नृसिंहस्तु सर्वजीवनियामकः ।
एकपञ्चाशद्वर्णात्मा मतृकामन्त्ररिरितः ।। १.९१ ।।

नारायणाष्टवर्णाश्च चतुर्व्याहृतिभिः क्रमात् ।
वासुदेवद्वादशार्णमन्त्रोभून्महदात्मकः ।। १.९२ ।।

केशवाद्याः द्वादशैव तन्मन्त्राक्षर देवताः ।
त्रिवारं विष्णुनैवोक्तान्मन्त्रान्नारायणादभूथ् ।। १.९३ ।।

गयत्री ब्रह्मःऋषिका द्विगुणाद्द्वादशाक्षरात् ।
केशवाद्याश्चतुर्विंशत्गायत्रीवर्णदेवताः ।। १.९४ ।।

गायत्र्याः पौरुषं सूक्तं सूक्तान्मन्त्रास्तु वैष्णवाः ।
पुंसूक्तप्रतिपाद्यस्तु पुरुषो हरिरीरितः ।। १.९५ ।।

विष्णुमन्त्रोदितो विष्णुः सर्वात्मा परिकीर्तितः ।
प्रणवोष्टौ व्याहृतयो मात्रृकाद्वादशाक्षरौ ।। १.९६ ।।

गायत्री ब्रह्मःऋषिका पुंसूक्तं वैष्णवं तथा ।
अष्टावेते महामन्त्राः वैदिकाःसर्वसिद्धिदाः ।। १.९७ ।।

पुंसूक्तात्सर्ववेदानां व्यक्तिरासीदिति श्रुतिः ।
दुर्गयानन्तरूपिण्यानन्त वेदोदितो हरिः ।। १.९८ ।।

तयार्थितोऽखिलाध्यक्षः स्वात्मासृष्टिमचीक्ळपथ् ।। १.९९ ।।

इति श्री परतत्त्वनिर्णये प्रकाशसंहितायां प्रथमपरिच्छेदे प्रथमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः २



श्रीहंस उवाच

संस्तुतो भगवानेवं तदैवोत्थाय केशवः ।
शून्यनामाथ जगृहे परुषाख्यां तनुं हरिः ।। २.१ ।।

पुरुषः सर्वरूपाणां व्यक्ताबीज इवस्थितः ।
सोनन्तात्मा व्याप्ततनुः विश्वकुक्षिरितीरितः ।। २.२ ।।

पुरुषाद्वासुदेवाद्याश्चत्वारो ह्यभवंस्ततः ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ।। २.३ ।।

श्वेतरक्तपीतनीलाः वासुदेवादयः क्रमात् ।
मुक्त्यैहृत्यै तथा गुप्तै सृष्ट्यै स्वेच्छातनुर्हरिः ।। २.४ ।।

शून्यनाम्नी रमादेवी श्रीर्भूत्वा पुरुषंश्रिता ।
सैवमायाजयाभूत्वा कृतिःशान्तिरितीरिता ।। २.५ ।।

वासुदेवादि भार्यासीत्सर्वदा सानपायिनी ।
चतुर्मुखो वासुदेवः ब्रह्मणो बिम्बरूपकः ।। २.६ ।।

सङ्कर्षणः सहस्रास्यः फणिराड्बिम्बरूपकः ।
प्रद्युम्नो मारबिम्बात्मा ह्यतिसुन्दरविग्रहः ।। २.७ ।।

बिम्बात्मा कामपुत्रस्यानिरुद्धास्यानिरुद्धकः ।
सकृद्धोल्कादि पञ्चात्मा विश्वाद्यष्टतनुर्हरिः ।। २.८ ।।

विमलादिनवात्माभूत्समत्स्यादि दशाकृतिः ।
शक्त्यादि द्वादशात्माभूद्वारकादि षोडशरूपवान् ।। २.९ ।।

आनन्दादि त्रयोविंशद्रूप आसीत्परात्परः ।
केशवादि चतुर्विंशद्रूपवानभवद्धरिः ।। २.१० ।।

अजादि पञ्चाशद्रूपः ततोभूत्पुरुषोत्तमः ।
कालाख्यषष्ठिरूपोभूत्संवत्सरनियामकः ।। २.११ ।।

नारायणादि शतकः स विश्वादि सहस्रकः ।
पराद्यनन्तरूपोभूदात्मभेद विवर्जितः ।। २.१२ ।।

तदाज्ञयैव देवी सा रमापि बहुरूपिणी ।
स तयानन्तरूपिण्या अनन्तरूपो रमापतिः ।। २.१३ ।।

स्वरतोऽपि तया देव्या तत्प्रीत्यर्थं दयानिधिः ।
लयकालाष्टमांशन्तु नीत्वा पुरुषपुङ्गवः ।। २.१४ ।।

प्रारम्भे सृष्टिकालस्य अजादीन्स्रष्टुमारभथ् ।। २.१५ ।।

इति श्री परतत्वनिर्णये प्रकाशसंहितायां प्रथमपरिच्छेदे द्वितीयोध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ३





---

श्रीहंस उवाच

जालरन्ध्रात्प्रहाविष्टा सूर्यरश्मिप्रभा भुवि ।
यदा भवन्ति तस्याः समीपे तिर्गास्थितः ।। ३.१ ।।

केशं यदोद्गमयतो सो मर्त्यानां परमाणुकः ।
मर्त्योत्तमो भक्तिपाकात्महरादिषु संस्थितः ।। ३.२ ।।

यं कालं सूक्ष्मदृग्वेद स कालः परमाणुकः ।
तच्छतांशो हि देवानां तच्छतांशोब्जजस्य तु ।। ३.३ ।।

भूमौ स्थितानां मर्त्यानां यः कालः परमाणुकः ।
तच्छतांशो देवलोके स्थितस्य परमाणुकः ।। ३.४ ।।

तत्कोट्यंशो रमायाश्च तदनन्तांशको हरेः ।
परमाणुरिति प्रोक्तः तदन्यैर्न्यैव बुध्यते ।। ३.५ ।।

परमाणुद्वयात्मातु कालो द्व्यणुकरिरितः ।
परमाणुत्रयात्मस्य त्र्यणुकः परिकीर्तितः ।। ३.६ ।।

त्रुटिः त्रिभिश्च त्र्यणुकैः वेधः स्यात्तत्रयेण तु ।
लवोवेधत्रयात्मास्यात्निमेषस्तु त्रिभिर्लवैः ।। ३.७ ।।

क्षणस्त्रिनमिषः प्रोक्तः काष्ठाख्या क्षणपञ्चकात् ।
काष्ठाभिः पञ्चदशभिः लघुकालः प्रकीर्तितः ।। ३.८ ।।

लघुभिः पञ्चदशभिः विनाडिका प्रकीर्तिता ।
विनाडिका षष्ठिभिर्या नाडिकैका भविष्यति ।। ३.९ ।।

ताभ्यां मुहूर्तत्रिंशद्भिः अहोरात्रमितीरितं ।
अष्टमांशान्न्यूनसप्तघटिकाभिश्च सप्तभिः ।। ३.१० ।।

सपादसप्तभिर्वापि सार्धसप्तभिरेव वा ।
यामः कालोष्टभिर्वापि कालभेदेन चोदितः ।। ३.११ ।।

यामैश्चतुर्भिः अहः स्यात्तावद्भिर्यामिनीमता ।
अहोरात्रत्रिंशता च मासः पक्षद्वयात्मकः ।। ३.१२ ।।

ताभ्यां ऋतुस्तत्रयेणैवा अयनं परिकीर्तितं ।
कर्कादि कार्मुकान्तेषु यदा चरति भस्करः ।। ३.१३ ।।

दक्षिणायनमुद्दिष्टं देवानां रात्रिसंज्ञकं ।
यावन्नक्रादिके भानौ मिथुनान्तेषु तिष्ठति ।। ३.१४ ।।

उत्तरायणमुद्दिष्टं तावत्कालं विचक्षणैः ।
अयनाभ्यां वत्सरस्तु द्विषण्मासात्मकः स्मृतः ।। ३.१५ ।।

षष्ठ्युत्तरत्रिशतकैः अहोरात्रैश्च वत्सरः ।
अष्टाविंशत्सहस्रैस्तु लक्षसप्तदशाब्दतः ।। ३.१६ ।।

क्ळप्तः कृतयुगस्तस्मात्त्रेतापादोनमुच्यते ।
सहस्रषण्णवत्येतलक्षद्वादश संमितः ।। ३.१७ ।।

त्रेतायुगस्ततः पादन्यूनो द्वापररिरितः ।
चतुःषष्ठिसहस्रेत अष्टलक्षमितिस्मृतः ।। ३.१८ ।।

द्वापररात्तु कलिस्तस्मादर्धपादमितिस्मृतः ।
द्विषोडशसहस्रेताच्चतुर्लक्षात्मकः कलिः ।। ३.१९ ।।

कृतत्रेताद्वापरश्च कलिश्चेति चतुर्युगाः ।
चतुर्युगात्मकः कालो महायुग इतीर्यते ।। ३.२० ।।

विंशत्सहस्रेतलक्षत्रिचत्वारिंशदब्दकैः ।
क्ळप्तः कालः कालदृग्भिः महायुग इतीर्यते ।। ३.२१ ।।

षष्ठ्युत्तराब्दत्रिंशताद्देवानामब्दरिरितः ।
तादृगब्दसहस्राणां चतुष्कोणः कृताह्वयः ।। ३.२२ ।।

त्रेता तु त्रिसहस्राब्दा द्विसहस्राब्दसंमितः ।
द्वापरस्तु ततो न्यूनसहस्राब्दमितः कलिः ।। ३.२३ ।।

कृतस्यादौ कृतान्ते च पृथगब्दश्चतुःशतं ।
सन्धिस्त्रेतायुगाद्यन्ते पृथगब्दशतत्रयं ।। ३.२४ ।।

सन्धिस्तु द्वापराद्यन्ते पृथगब्दशतद्वयं ।
शताब्दःसंमितः कालः सन्धिराद्यन्तयोः कलेः ।। ३.२५ ।।

एवं दैवेन मानेन द्वदशाब्दाःसहस्रतः ।
क्ळप्तः कालः कालविद्भिः महायुग इतीर्यते ।। ३.२६ ।।

सार्धाष्टादशलक्षाब्दे युगानां एकसप्तति ।
मिलितो मनुसन्धातभोगकाल उदीरितः ।। ३.२७ ।।

द्विषट्शताब्दसमितो लयः स्वायम्भुवोत्तरः ।
स्वारोचिषादिकानान्तु षण्णामप्यन्तरे लयः ।। ३.२८ ।।

पञ्चादशशताब्दात्मा लयः काल उदीरितः ।
चतुर्दशशताब्दात्मा लयः काल उदाहृतः ।। ३.२९ ।।

तदन्य मन्वन्तरेषु नियमात्सर्वदैव तु ।
चतुर्युगसहस्रन्तु ब्रह्मणो दिन उ(दिवमु)च्यते ।। ३.३० ।।

रीत्रिश्च तावती तस्य अहोरात्रा तु तादृशा ।
षष्ठ्युत्तरत्रिशतकाद्वत्सरोऽजस्य कीर्तितः ।। ३.३१ ।।

एवं विधशताब्दात्मा कालोऽजस्यायुषो मतः ।
वासुदेवात्सूक्ष्मतनुं स्वशताब्दादिमे क्षणे ।। ३.३२ ।।

यः प्राप सशताब्दायुः तद्रूपाणीतराणि तु ।
मासत्रयाधिकादब्दषट्कात्पूर्वतनादभूथ् ।। ३.३३ ।।

सृज्यानां सूक्ष्मसांशानां सूक्ष्मसृष्टिश्चतुस्तनोः ।

सृष्टानां सूक्ष्मतः पूर्वं स्थूलदेहस्ततोऽभवथ् ।। ३.३४ ।।

नारायणादजाद्रुद्रात्क्रमात्कालानुसारतः ।
यावतां सूक्ष्मतः सृष्टिः स्थूलसृष्टिस्तु तावता ।। ३.३५ ।।

अण्डादूर्ध्वं चावृतयः स्थूलदेहाश्च तन्मयाः ।
आद्यस्य ब्रह्मणः पूर्वं पञ्चाशद्वत्सरान्ति मे ।। ३.३६ ।।

दिने व्यतीते तद्रात्रावण्डसृष्टिरथाभवत् ।
तदन्तः स्वपतो विष्णोर्जलमध्यगतस्य तु ।। ३.३७ ।।

नाभ्युत्थिताल्लोकमयात्प्राकृतात्पद्मकोशतः ।
पाद्मः ब्रह्मोत्थितःसार्धं सप्तत्रिंशच्चतन्मये ।। ३.३८ ।।

दिनान्तिमे निशायां च नाशोऽण्डस्य जगत्पतेः ।
व्युत्क्रमात्पूर्वमानेन स्थूलसूक्ष्मस्य नाशनं ।। ३.३९ ।।

एवं शतायुषः पूर्णेद्विपरार्धात्मकायुषी ।
स्वयं चात्मस्वरूपाणां एकीभावं करोत्यजः ।। ३.४० ।।

यावत्कालेनात्मसृष्टिरेकीभावस्तु तावता ।
एकीभूतेपि रमति तथैकीभूतमायया ।। ३.४१ ।।

तावत्कालं ततः पश्चात्सुप्तवत्स्वापयत्यजः ।
सार्धद्विषड्ब्रह्मवर्षमिति शिष्टे निशान्ति मे ।। ३.४२ ।।

भागे पुनः पूर्ववच्च आत्मसृष्ट्यादिमीश्वरः ।
करोति पुरुषस्तस्य नायुर्मानं विधीयते ।। ३.४३ ।।

एवं विधापरिमितानन्तानन्तपरात्मके ।
काले भाविन्यपि हरिः सृष्ट्यादीशः करिष्यति ।। ३.४४ ।।

स्वन्तन्त्रस्यास्य मर्यादा अस्वतन्त्रैर्न शक्यते ।
लङ्घितुं पूर्णशक्तेर्हि वशे सर्वं चराचरं ।। ३.४५ ।।

येऽनन्तकालतस्तस्य मृतिजन्मजरादयः ।
आयासदुःखदौर्भाग्यचिन्तासन्तापपूर्वकाः ।। ३.४६ ।।

अज्ञानेर्ष्यासूयपीडा कामक्रोधभयादयः ।
कृशतारोगदुरितपुण्यलेपादयस्तथा ।। ३.४७ ।।

आशाहानिश्च वृद्धिश्च क्षुत्तृट्कम्पादयस्तथा ।
नासन्दोषाः नोत्तरत्र भविष्यन्त्यखिलेश्वरे ।। ३.४८ ।।

तत्तद्दुर्जनसङ्घैश्च ये कल्प्याः दोषसञ्चयाः ।
तत्तद्विरोधि सुगुणानन्त्यपूर्णस्य मीलुषः ।। ३.४९ ।।

तद्दोषलेशगन्धोपि न विष्णोरिति निश्चयः ।
यः कालः परमाण्वादि द्विपरार्धावसानकः ।। ३.५० ।।

तेषु सर्वेषु कालेषु तत्तन्नाम्ना रमापतिः ।
तत्सामर्थ्यव्यञ्जकश्च स्थित्वा रक्षत्यजः प्रभुः ।। ३.५१ ।।

नित्यः कालप्रवाहोयमनित्यास्तु क्षणादयः ।
नष्टेषु सत्सुकालेषु वर्तमानेषु वै क्रमाथ् ।। ३.५२ ।।

अविनाश्य स्वरूपोसौ तत्प्रवाहस्य रक्षकः ।
शताब्दःसंमितः कालो ब्रह्मणः परसंज्ञकः ।। ३.५३ ।।

सकालस्तु निमेषाख्यः अहश्च परमेशितुः ।
इत्यज्ञजनबुद्धीनां शुद्ध्यर्थमुपचर्यते ।। ३.५४ ।।

अत आहुर्महाप्राज्ञाः कालतोनन्तमीश्वरं ।
अथापि परकालान्तं ब्रह्माणं जनयन्विभुः ।। ३.५५ ।।

अङ्गीकरोति तं कालमहोयदखिलेश्वरः ।
रात्रिमानादि शून्योपि तावन्तं कालमीश्वरः ।। ३.५६ ।।

रात्रित्वेन चरत्येवं ब्रह्मादीन्स्वापयत्यजः ।
निशायाश्चरमे भागे आत्मसृष्ट्यादिमीश्वरः ।। ३.५७ ।।

करोति पुरुषस्तस्य आयुर्मानं विधीयते ।
एवं विधापरिमितानन्तानन्तपरात्मकः ।। ३.५८ ।।

कालाव्यतीता सृष्ट्यादि कर्तुर्विष्णोः परात्मनः ।
स्वरूपेन्द्रियवद्योसौ कालोरूपादिवर्जितः ।। ३.५९ ।।

पूर्वपूर्वसु कालेषु नष्टेष्वन्ये भवन्ति हि ।
उत्तरत्रायास्यमानपरमाणुप्रवाहतः ।। ३.६० ।।

संयोज्यघटिकाद्यास्तु कालोज्ञेयः समानतः ।
घटिकायाममासाद्या नैकदा सम्भवन्ति हि ।। ३.६१ ।।

आयुर्मानविहीनस्यानन्तानन्तपरात्मकैः ।
विष्णोः कालानन्त्यमितौ कालज्ञान(नं)प्रयोजकं ।। ३.६२ ।।

वेदानामक्षराणाञ्च देशन्याव्याकृतस्य च ।
रमायाः सर्वजीवानां मुक्तानां लिङ्गसंयुजां ।। ३.६३ ।।

समस्तलिङ्गदेहानां जडायाः प्रकृतेस्तथा ।
एतेषामस्वतन्त्राणां स्वतन्त्रवशवर्तिनां ।। ३.६४ ।।

कालानन्त्यमितौ नित्यं कालज्ञान(नं)प्रयोजकं ।
अनित्या(अनन्ता)नां जडानां च सूक्ष्मस्थूलशरीरिणां ।। ३.६५ ।।

आयुर्माने शरीराणां कालज्ञनं प्रयोजकं ।
एवं कालगतिं जानन्कालभीतिं तरिष्यति ।। ३.६६ ।।

एकस्मिन्परकालेतु एकमण्डं जगद्गुरुः ।
दशावरणसंयुक्तं सृजत्यवति हन्त्यजः ।। ३.६७ ।।

नैकदाजाण्डबहुलं स्रष्टुमिच्छति केशवः ।
ब्रह्माणं गरुडं शेषं इद्रं प्राणं रविं सुरान् ।। ३.६८ ।।

एकमेकं हरिर्मुक्तं(क्त)परकाले करोत्यजः ।
तथाप्यजाण्डानन्तानां नियन्ताजाण्डरूपवान् ।। ३.६९ ।।

हरिः तादृङ्महारूपानन्तानन्तानि वै हरेः ।
रोमाङ्कुरेष्वनन्तेषु संवसन्तीति हि श्रुतिः ।। ३.७० ।।

तादृशानन्तरूपाणां अनन्त्यानन्त्ययोगतः ।

अधश्चोर्ध्वं चाष्टदिक्षु संयुक्तानामनन्तशः ।। ३.७१ ।।

रूपानन्त्यैरपूर्णोरु देशे पूर्णतनुर्हरिः ।
अत्यभिन्नोरुचित्सौख्यबलादि गुणविग्रहः ।। ३.७२ ।।

निर्विशेषः सर्वगतः सूक्ष्मस्थूलादिरूपकः ।
समशक्तिः समज्ञानबलादिशुभसद्गुणः ।। ३.७३ ।।

समाधिकविहीनश्च रमयानन्तरुपया ।
सहस्वाधीनया सत्याशेषचिज्जडभृद्धरिः ।। ३.७४ ।।

स्वभिन्नायाः श्रियाः भिन्नाः मुक्तामक्तासुचिद्गुणैः ।
भिन्नैर्नित्यजडैःसत्यैः भिन्नैः जीवेश्वरैः सदा ।। ३.७५ ।।

विभिन्नो विश्वतो विष्णुः देशतो गुणतो विभुः ।
अनन्तानन्तरूपेण अभिन्नोभिन्नवद्धरिः ।। ३.७६ ।।

पूर्णोपि जडचिद्रूपं सृजत्यवति हन्त्यजः ।। ३.७७ ।।

इति श्री परतत्तवनर्णये प्रकाशसंहितायां प्रथमपरिच्छेदे तृतीयोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ४





---

श्रीहंस उवाच

सूक्ष्मं सर्वजगद्बीजं मितं त्रातं च विष्णुना ।
प्रधानमव्यक्तमिति यद्वदन्ति मनीषिणः ।। ४.१ ।।

महामायेत्यविद्येति प्रकृतिर्मोहिनीति च ।
त्रिगुणात्मकमव्यक्तं त्रिरूपं तत्त्रिशक्तिमथ् ।। ४.२ ।।

अविद्याकामकर्मादि बीजमित्यपि तां विदुः ।
रक्षितं प्रलये सृष्टा(वेवा)वण्वनन्तस्वरूपवान् ।। ४.३ ।।

अनादिकर्मग्रन्थीति बन्धोबन्धकमित्यपि ।
अजामनन्यवशगां कलाषोडशसंयुतां ।। ४.४ ।।

तीव्रदुःखात्मकां नानायोनिप्रापकमीरितं ।
नारिकेलसमाकारं परिच्छेदत्रयात्मकं ।। ४.५ ।।

मूर्ध्निच्छिद्रयुतं दिव्यं रत्नवद्भास्वरं सदा ।
विष्णुना रमयाच्छन्नाच्छिद्रगर्भावकाशवथ् ।। ४.५ ।।

सृष्टौ लये रमा तस्य मानिनी च निरन्तरं ।
सृष्टावेव ब्रह्मवायू सभार्याविभिमानिनौ ।। ४.७ ।।

रजःसत्त्वतमःसंज्ञभागत्रयसमन्वितं ।
सत्वभागः शुक्लवर्णः रक्तवर्णस्तु राजसः ।। ४.८ ।।

नीलवर्णस्तमोभाग इति भागत्रयात्मकः ।

ज्ञानकर्मेन्द्रियकलाः रजोभागे व्यवस्थिताः ।। ४.९ ।।

तमोभागगताः पञ्चतन्मात्रासंज्ञिताः कलाः ।
मनः कला सत्वभागगता सर्वप्रधानिका ।। ४.१० ।।

मनोबुद्धिरहङ्कारश्चित्तं चेति चतुर्विधं ।
कामक्रोधमहालोभमदमात्सर्यमोहकाः ।। ४.११ ।।

द्वेषाहङ्कारममकारेर्ष्यसूयाभयादयः ।
मनोदोषास्तद्विहीनं मनोज्ञानाय साधनं ।। ४.१२ ।।

मनश्चतुर्विधं नित्यं जडप्रकृतिगं मतं ।
तज्जन्यमप्यनित्यं स्यात्तत्र चित्तं न दोषयुक् ।। ४.१३ ।।

मनः स्वर्णाद्यनेकार्थमपेक्षां जनयिष्यति ।
बुद्धिर्निषिद्धभोग्च्छां सदासंकल्पयिष्यति ।। ४.१४ ।।

अहङ्कारः पुमर्थानां घातकः: सोत्तमैः सह ।
स्पर्धां विष्णुसुरद्वेषं कल्पयत्यपि सर्वशः ।। ४.१५ ।।

चित्तं सत्साधनगतं करोति पुरुषं सदा ।
सत्साधनमहङ्कारकलितं पापमेवहि ।। ४.१६ ।।

अहङ्कारविहीनं तच्चित्तं विज्ञानसाधनं ।
रचिते भारते वर्षे यथा मानुषसत्तनुं ।। ४.१७ ।।

लब्ध्वा गुरुकुलावासं कृत्वानेकसुजन्मभिः ।
कृत्वात्मयोग्यसत्कर्म लब्धसद्गुरुसेवया ।। ४.१८ ।।

प्रसन्नैरुपदिष्टोरु सच्छास्त्रश्रवणादिभिः ।
वृत्तिज्ञानप्रदं तच्च वृत्तिभक्त्यादि साधकं ।। ४.१९ ।।

ताभ्यां स्वारूपिकज्ञानभक्तिर्व्यक्तिर्भविष्यति ।
स्वारूपिकं मनो नित्यं ततः स्वारूपिकी मतिः ।। ४.२० ।।

व्यक्ता भवति नित्या सा भक्तिः स्वारूपिकी तथा ।
सैवानन्दस्वरूपेण नित्या मुक्तेषु तिष्ठति ।। ४.२१ ।।

इन्द्रियाणां गोलकानि दृश्यान्याहुः समग्रशः ।
अतीन्द्रियाणीन्द्रियाणि ज्ञानकर्ममयानि च ।। ४.२२ ।।

श्रोत्रत्वङ्नेत्ररसनघ्राणाद्या ज्ञानशक्तयः ।
वाक्पाणिपादपायूपस्थाः सर्वे कर्मशक्तयः ।। ४.२३ ।।

श्रोत्रं शब्दग्राहिशब्दो द्विविधः परिकीर्तितः ।
शब्दो ध्वन्यात्मको वर्णात्मकश्चेति तदादिमः ।। ४.२४ ।।

अहङ्कारात्समुद्भूतः आकाशोत्पत्तिकारणः ।
ध्वन्यात्मकस्तु शब्दस्तु प्रथमः परिकीर्तितः ।। ४.२५ ।।

ज्ञानकर्मेन्द्रियमनोमात्राः सूक्ष्माह्यनादयः ।
नित्याश्च प्रलये सृष्टावनित्यास्ते प्रकीर्तिताः ।। ४.२६ ।।

वर्णात्मकस्तु यःशब्दो नित्यः सर्वगतो विभुः ।
द्रव्यमित्येव सर्वेषां न गुणः कस्यचिन्मते ।। ४.२७ ।।

वेदाः पदाद्वर्णतश्च शब्दतः स्वरतस्तथा ।
अनादिनित्यास्ते सर्वेप्यपौरुषेयगुणोत्कराः ।। ४.२८ ।।

विष्णोर्माहात्म्यविज्ञप्तौ सत्प्रमेये च साधकाः ।
शास्त्राणिच पुराणानि पौरुषेयाणि कृत्स्नशः ।। ४.२९ ।।

यथार्थानि प्रणीतानि हरिणाथ सुरर्षिभिः ।
नित्यान्येवार्थतो वर्णक्रमयोगादनित्यकाः ।। ४.३० ।।

सात्विकानि पुराणानि मन्वादि स्मृतयस्तथा ।
यथार्थ एव तत्रोक्तं ग्राह्यं श्रीहरितत्परैः ।। ४.३१ ।।

वाराहं वैष्णवं पाद्मं वायुप्रोक्तं च गारुडं ।
श्रीमद्भागवतं चैव सात्विकानीति हि श्रुतिः ।। ४.३२ ।।

ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं च वामनं ।
भविष्यं नारसिंहं च राजसानि षडैव हि ।। ४.३३ ।।

मात्स्यं कौर्म्यं तथा लैङ्ग्यं शैवं स्कान्दं तथैव च ।
पाशुपतसंज्ञिकं चेति तामसानि विदो विदुः ।। ४.३४ ।।

ग्राह्यं सर्वं सात्विकोक्तं योजना भेदतोथवा ।
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।। ४.३५ ।।

इतराणि विरुद्धानि प्रलम्भभ्रमजान्यपि ।
व्यासोक्तानि पुराणानि सात्विकान्यपि कृत्स्नशः ।। ४.३६ ।।

क्वचित्क्वचित्पुराणानि प्रायोज्ञानकराण्यपि ।
आसुरावेशवशतः तदन्योक्तान्यनन्तशः ।। ४.३७ ।।

श्रोत्राग्राह्याणि सन्त्येव अप्रमाणानि तान्यलं ।
परशुक्लत्रयोक्तानि नित्यं विष्ण्वाज्ञयैव तु ।। ४.३८ ।।

अतिप्रमाणानि दैत्यावेशाज्ञानादि वर्जनात् ।
बधिरत्वादयः श्रोतृदोषास्तद्वर्जितेन्द्रियैः(याः) ।। ४.३९ ।।
एतानि विषयाण्याहुः श्रोतव्यानि सहस्रशः ।
शब्ददोषविहीनानि ग्राह्याणि मनसा सह ।। ४.४० ।।

तत्रोक्तानन्तसुगुणं निर्देषं ज्ञेयमीश्वरं ।
गम्यं सत्यं च सुखचिन्मयं विष्णुं सनातनं ।। ४.४१ ।।

आत्मेश्वरं हरिं भक्त्योपा(स्त्या)स्यमुक्ता भवन्ति हि ।
कुशास्त्रेषूक्तदुर्मार्गे हेयता बुद्धिसंयुतं ।। ४.४२ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे चतुर्थोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ५





---

श्रीहंस उवाच

ज्ञानेन्द्रियाणि पञ्चानि पञ्चकर्मेन्द्रियाणि च ।
रजोभागगतान्येषु श्रोत्रमा(त्रं)द्यं विशिष्यते ।। ५.१ ।।

श्रावणास्याद्यभक्तेस्तु साधकत्वाद्गुणाधिकं ।
त्वक्चर्मगोलके सर्वदेहगे समु(पाश्रिता)पस्थिता ।। ५.२ ।।

कुष्ठभङ्गुरपामाद्याः त्वक्दोषाः परिकीर्तिताः ।
अव्यक्तादि स्पर्शदोषशून्याः शीतोष्णपूर्वकाः ।। ५.३ ।।

स्पर्शास्तद्विषयाः प्रोक्ताः वायुतेजोम्बुभूमयः ।
पदार्थाः केचनगुणाः सत्वगिन्द्रियगोचराः ।। ५.४ ।।

त्वक्स्पर्शौ प्रकृतिस्थौ द्वौ नित्यौ स्थूलावनित्यकौ ।
तज्जन्यौ प्राकृतौ वायुसंश्रयौ नश्वरौ मतौ ।। ५.५ ।।

इन्द्रियाणान्तु विषयाः गुणामात्राः प्रकीर्तिताः ।
ज्ञानात्मकानां ते सर्वे द्विविधाः परिकीर्तिताः ।। ५.६ ।।

विष्णुवैष्णवसेवायै अनुकूलाःशुभा मताः ।
अशुभाः प्रतिकूलाश्च पुनस्ते त्रिविधा मताः ।। ५.७ ।।

मुक्तियोग्याश्रिता नित्याः नित्यसृतिषु मध्यमाः ।
तमोयोग्याश्रिता नीचास्तत्तद्योग्यसुसाधनैः ।। ५.८ ।।

नीचमध्योत्तमस्थानप्रापकाः क्रमयोगतः ।
जीवस्वरूपभूतानि मनोमात्रेन्द्रियाणि च ।। ५.९ ।।

तत्स्वरूपाणि नित्यानि उत्तमेषु शुभान्यपि ।
उत्तमा मुक्तियोग्यास्तु नित्यबद्धास्तु मध्यमाः ।। ५.१० ।।

अधमास्तु तमोयोग्याः मनोमात्रादयस्तथा ।
स्वारूपिकाश्चलिङ्गस्थाः अनित्याः स्थूलदेहगाः ।। ५.११ ।।

विष्णोरमायाब्रह्मादि मुक्तानां क्रमयोगतः ।
मनोमात्रेन्द्रियज्ञानसुखधैर्यबलादयः ।। ५.१२ ।।

स्वरूपाण्येवविष्णोस्तु नित्यव्याप्तानि कृत्स्नशः ।
स्वतन्त्राणि स्वतन्त्रस्य (कर्माणि तु)पुरुषस्य महात्मनः ।। ५.१३ ।।

स्वस्वरूपस्थितौ यस्य ज्ञानेकर्मण्यपि स्फुटं ।
सर्वस्वरूपचेष्टासु परापेक्षा न यस्य हि ।। ५.१४ ।।

स स्वन्तन्त्र इति प्रोक्तः स विष्णुर्नेतरः क्वचित् ।
अव्यक्ततत्कार्यमय देहशून्यारमापि हि ।। ५.१५ ।।

तच्चित्तेन्द्रियमात्रास्तु नित्या व्याप्ता स्वरूपका(काः) ।
विष्ण्वैकवशगास्तस्याः हर्यपेक्षासदस्ति हि ।। ५.१६ ।।

परापेक्षयुतत्वात्सा अस्वतन्त्रा प्रकीर्तिता ।
ब्रह्मादिमुक्तामुक्तानां अस्वतन्त्र्यमनादितः ।। ५.१७ ।।

सिद्धमेव स्वरूपे च ज्ञाने कर्मण्यपि स्फुटं ।
नीचानीचस्वरूपाणां उत्तमोत्तमचेतसां ।। ५.१८ ।।

प्रसादतः प्रवृत्तिर्हि ज्ञानभक्त्यादि चाखिलं ।
ज्ञानाज्ञानतमोमोक्षाः नित्यानित्यजडस्य च ।। ५.१९ ।।

नोत्पत्तिनाशौ जीवानां त्रिविधानां समस्तशः ।
स्वरूपदुःखद्वेषेर्ष्या चिन्तासन्तापपूर्वकाः ।। ५.२० ।।

न मुक्तानां देहयोगो यावत्तेषां भयादिकं ।
भयादीनि च योग्येभ्यः उत्तमेष्वल्पमेव च ।। ५.२१ ।।

ज्ञानं मुक्तिरयोग्यस्य न च स्वप्नेपि दृश्यते ।
स्वरूपाज्ञानतमसी योग्यानां न कदाचन ।। ५.२२ ।।

सृष्टिं स्थितिं संहृतिं च नियतिं जगतोस्य तु ।
ज्ञानाज्ञाने तमोमोक्षौ विष्णुनैव विदो विदुः ।। ५.२३ ।।

ब्रह्मादीनां स्वरूपन्तु अत्यन्ताणुतमं मतं ।
तदिन्द्रियाणि सूक्ष्माणि सूक्ष्माण्येव स्थिराणि तु ।। ५.२४ ।।

चक्षुर्गोलकगं नेत्रं रूपग्राह्यमतीन्द्रियं ।
नित्यमव्यक्तगं स्थूलमनित्यं जन्यमक्षि च ।। ५.२५ ।।

स्वरूपनेत्रकलितं नित्यानित्ये अक्षिणी उभे ।
ज्ञानप्रदे साक्षिसंज्ञे सर्वस्वारूपकेन्द्रियं ।। ५.२६ ।।

उक्तानां वक्ष्यमाणानां इन्द्रियाणां समग्रशः ।
स्वारूपेन्द्रियसाहाय्यं विना शक्तिर्नविद्यते ।। ५.२७ ।।

वृद्धिं हानिं च लभते गुणैर्दोषैः स्वरूपतः ।
साक्षीन्द्रियन्तु योग्यानां स्वोत्तमद्रोहतां विना ।। ५.२८ ।।

तत्रापीषत्कुतश्चित्तु तत्सर्वं कुण्ठितं भवेत् ।
पटलं कामिला काचः प्रतिदीधिति सङ्गतिः ।। ५.२९ ।।

नेत्ररोगं व्रणाद्याश्च पैत्यप्रतिहतास्तथा ।
अक्षिभ्रमणशैत्याद्याः नेत्रदोषाः प्रकीर्तिताः ।। ५.३० ।।

आरस्थत्वं दूरगत्वं सौक्ष्मं च व्यवधानतः ।
स्थितिः समानाभिघातः अर्थदोषाः प्रकीर्तिताः ।। ५.३१ ।।

निर्दोषविषया ये च निर्दोषेक्षणगोचराः ।
शुक्लं रक्तं श्वेतपीतहरितादीनि कृत्स्नशः ।। ५.३२ ।।

चित्रादीनि स्वरूपाणि चक्षुषो विषयाणि च ।
उद्भूतरूपसंयुक्ताः तेजोवार्भूमयात्मका ।। ५.३३ ।।

चक्षुषो विषयाः प्रोक्ताः केचित्सूर्योदयोऽमराः ।

जिह्वा गोलकगं प्राहुः रसनेन्द्रियमुत्तमं ।। ५.३४ ।।

अतीन्द्रियमरुच्याद्यास्तद्धोषास्फोटकादयः ।
कषायश्च कटुस्तिक्तः लवणो मधुराम्लकौ ।। ५.३५ ।।

तथा चित्ररसश्चेति रसनेन्द्रियगोचराः ।
दोषहीनस्य च रसज्ञानं जनयति स्फुटं ।। ५.३६ ।।

ज्ञानं जनयति क्षिप्रं प्राकृतंप्रकृतिस्थितं ।
दुष्टा पर्युषिता यामहीना पूतियुता रसाः ।। ५.३७ ।।

सदोषा रससम्बन्धे रसना ज्ञानदा न हि ।
भूमयांमया अर्थाः रसनेन्द्रियगोचराः ।। ५.३८ ।।

घ्राणगोलकगं प्रोक्तं नासिकेन्द्रियमूर्जितं ।
पीनसाद्याः घ्राणदोषाः गन्धग्राहेन्द्रियं मतं ।। ५.३९ ।।

व्यामिश्राद्याः दोषभागाः गन्धदोषाः प्रकीर्तिताः ।
वक्त्रगोलकगं प्रोक्तं वागिन्द्रियमतीन्द्रियं ।। ५.४० ।।

नित्यानित्यवचांस्तस्य सत्यासत्यवचांसि च ।
वचांसि युक्तायुक्तानि गीर्वाणप्राकृतानि च ।। ५.४१ ।।

मूकत्वादि महादोषहीनवाग्गोचराणि च ।
गद्गदत्वास्पष्टताद्याः वाग्दोषाः परिकीर्तिताः ।। ५.४२ ।।

हस्तगोलकगं प्राहुः पाणीन्द्रियमतीन्द्रियं ।
व्यङ्गुलत्वादयस्तस्य दोषाः निर्देषामिन्द्रियं ।। ५.४३ ।।

गृह्णाती(व)ह परत्रापि यद्धितः स्वात्मनः सदा ।
भूमयारत्नहेमाद्या बह्वर्था विषयामताः ।। ५.४४ ।।

अश्मयाश्च तथाभावाः हस्तयोर्विषयामताः ।
कण्टकोच्छिष्टपाषाणवृश्चिकाद्या अनिष्टदाः ।। ५.४५ ।।

हेया अर्थाश्च हस्ताभ्यां परित्याज्याः सदा मताः ।
सानिष्टदं हितकरं हस्तयोर्हितदं मतं ।। ५.४६ ।।

अङ्घ्रिगोलकगं प्राहुः पादेन्द्रियमलं बुधाः ।
पङ्गुत्वाद्याः अङ्घ्रिदोषाः निर्देषगतिसाधनं ।। ५.४७ ।।

स्वारूपिगं प्रकृतिगं प्राकृतं त्रिविधं मतं ।
येनेन्द्रियेण यत्कर्मक्रियते साधुभिःसदा ।। ५.४८ ।।

तत्तस्य विषयः प्रोक्तः तन्नामेन्द्रिय गोचरं ।
पक्वापक्वं च भुक्तं च वातं जीर्णं च कुक्षिगं ।। ५.४९ ।।

कालेन विपरीतन्तु शकृदित्युच्यते बुधैः ।
तादृगर्थोत्सर्गसंज्ञो पायोर्विषयमीरितं ।। ५.५० ।।

भगन्धरादयो मूलव्रणाद्याः पायुसंस्थिताः ।
दोषाः निरोधातिसाराः पायोर्न यदि कार्यकृथ् ।। ५.५१ ।।

स्त्रीपुंसोर्भगमेढ्रादि गोलकस्थं ह्यतीन्द्रियं ।
उपस्थशिश्नसंज्ञे द्वे इन्द्रिये दोषवर्जिते ।। ५.५२ ।।

रत्युत्सृतौ प्रभवतः असृक्शुक्लाश्रयौ मतौ ।
मेहव्रणाद्याः तद्धोषाः निर्देषं स्वार्थसाधकं ।। ५.५३ ।।

प्रकृतं प्राकृतं चैव स्वरूपेन्द्रिय संयुतं ।
अर्थक्रियाकारि तद्धि नान्यथा भवति ध्रुवं ।। ५.५४ ।।

ज्ञानेन्द्रियाणि पञ्चापि पञ्चकर्मेन्द्रियाणि च ।
रजः परिच्छेदगानि भिन्नशक्तियुतानि च ।। ५.५५ ।।

ज्ञानेन्द्रियाणां विषयाः क्रमाच्छब्दादयोमताः ।
शब्दस्पर्शारूपरसगन्धास्ते च गुणामताः ।। ५.५६ ।।

मात्रातमः परिच्छेद पञ्चभूतान्तरामताः ।
भूतानि मात्रा गर्भेषु लीनाहुर्मनीषिणः ।। ५.५७ ।।

भावरूपाज्ञानगतं पञ्चकं गुणगर्भकं ।
मात्रासु लीनभूतेषु संस्थितं भावपञ्चकं ।। ५.५८ ।।

तमोमोहमहामोहतामिश्रान्धतामिस्रकाः ।
तमः शब्दगतं प्राहुः मोहः स्पर्शगतो मतः ।। ५.५९ ।।

महामोहो रूपगतः तामिश्रो रसगोमतः ।
गन्धे अन्धतामिस्राख्यस्त एते भावरूपकाः ।। ५.६० ।।

एतानि प्रकृतिस्थानि नित्याण्यणुतराणि च ।
स्थूलानि भूतव्यक्तानि अनित्यान्यामनन्ति हि ।। ५.६१ ।।

जीवस्वरूपं नैवते तद्विभिन्नं लिङ्गदेहगं ।
जीवस्वरूपविज्ञानाच्छादकं परिकीर्तितं ।। ५.६२ ।।

तत्साधनाद्व्यञ्जमानस्वरूपज्ञानबाधकं ।
तमः स्वरूपज्ञानस्य विपरीतप्रवर्तकं ।। ५.६३ ।।

यो मोहः स उपदेशेपि महामोहोऽनिवर्तयेत् ।
विद्वेषकारणं प्राहुः तामिश्रमुपदेष्टृषु ।। ५.६४ ।।

कुयुक्तिभिः क्वागम्यैश्च गाढाज्ञानैकसाधनं ।
अन्धतामिश्रसंज्ञाख्यं अनाद्यज्ञानमीरितं ।। ५.६५ ।।

अनादिकालमारभ्यानन्तानन्ताणुमात्रकाः ।
केशाद्यायुततुल्याल्पस्वरूपाह्यात्मगोचराः ।। ५.६६ ।।

तत्तत्स्वरूपकाकार हरिणाबिम्बरूपिणा ।
रक्षिताः प्रलये सृष्टा नित्यं तदनपायिना ।। ५.६७ ।।

एतत्कल्पादिभावीनां तत्तकल्पेषु वै क्रमात् ।
सृज्याः विलक्षणास्तुल्याः अतुल्यास्त्रिविधात्मकाः ।। ५.६८ ।।

जीवाः अनादितः सर्वेप्यस्वतन्त्रा रमावशाः ।
प्रकृत्यात्मकलिङ्गेन बद्धाः श्रीहरिकुक्षिगाः ।। ५.६९ ।।

लये सृष्टौ हरिःसृष्टाः अण्डाद्बहिरथान्तरे ।
सात्विकानीचमध्याश्च अन्तः सृज्या अतात्विकाः ।। ५.७० ।।

निरंशामर्त्यगन्धर्वपूर्वाः सर्वे तृणान्तिकाः ।

योग्या नित्यसृतिस्थाश्च तमो योग्याश्च कृत्स्नशः ।। ५.७१ ।।

सर्वेपि लिङ्गसम्बद्धा ये ते जीवा न चान्यथा ।
तेपि पूर्वानन्तकाल्पेष्वेवं स्वोचित साधनैः ।। ५.७२ ।।

मुक्ताः मध्यास्तमः प्राप्ताः सन्ति श्रीहरिगर्भगाः ।
नैषां क्वापि क्वचित्पूर्तिर्भविता नियमाद्धरेः ।। ५.७३ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे पञ्चमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ६



---

श्रीहंस उवाच

निःशेषतो रात्रिमाने व्यतीतेत्वहराग(दि)मे ।
क्षणे तं विश्वसृक्स्रष्टुमिच्छां चक्रेऽखिल(स्वयं)प्रभुः ।। ६.१ ।।

ततः स्वगर्भगान्जीवान्लिङ्गमुक्तान्विनेश्वरः ।
प्रकृत्यात्मकलिङ्गेन शरीरेणावृतास्त्रिधा ।। ६.२ ।।

विभिन्नानां स्तमसान्शुद्धराजसान्सात्विकान्प्रभुः ।
स्वोदरस्थान्समुधृत्यसृज्यान्पुरुषनामकः ।। ६.३ ।।

प्रादात्सवासुदेवाख्यो सर्वान्जीवान्जगत्प्रभुः ।
नैव सृष्टिस्तु मुक्तानां बद्धानां न हि सर्वशः ।। ६.४ ।।

सृष्टिरुक्तायुक्तः संख्या नियमात्सृष्टिरुच्यते ।
सृष्टिः संख्या नियमतः तात्विकातात्विकेषु च ।। ६.५ ।।

निरंशेषु न संख्यास्ति बहुत्वात्वाद्बहुधैव सा ।
ब्रह्मत्वयोग्या ऋजवो नामतोऽनन्तशो गणाः ।। ६.६ ।।

तेषु पूर्वानन्तकल्पैः मुक्ताः सन्ति ह्यनन्तशः ।
लिङ्गबद्धा अप्यनन्तानन्तशः सन्ति गर्भगाः ।। ६.७ ।।

हरेस्तेषां सर्वशोपि तेषु सृज्यास्तु केचन ।
ऋज्वादि तात्विकाःसर्वे अनादितो ह्यपरोक्षिणः ।। ६.८ ।।

सामान्यतो विशेषेण स्वस्वयोग्यापरोक्षिणः ।
क्ळप्तकालोचितमहासाधनेन भवन्ति हि ।। ६.९ ।।

यतन्ति ह्यपरोक्षार्थं ऋजवो शतसंमिताः ।
पूर्वापरोक्षिणस्ते च शतसंख्यामिताः सदा ।। ६.१० ।।

अनन्तवेदोक्तगुणोपासनायां हरेः सदा ।
यतन्ति तेपि क्रमशो ह्युपासीतगुणोच्चयाः ।। ६.११ ।।

भवन्ति वेधाः सम्पूर्णसद्गुणोपास्तिमानिह ।
काले मुक्तो भवत्येव मुच्यते नैकदैव हि ।। ६.१२ ।।

एवञ्च ब्रह्ममानेन कल्पद्विशतकेन च ।
पूर्णशक्तिः पूर्णगुणोपास्तिः मुक्ता भवत्यलं ।। ६.१३ ।।

मुक्तेः पूर्वक्षणे भोग्यसुप्रारब्धक्षयेपि च ।
एवमेवोत्तरत्रापि संख्या नियमतः सुराः ।। ६.१४ ।।

मुच्यन्ते तात्विका वक्ष्यमाणैः कल्पैरजस्य तु ।
द्विपञ्चाशत्कल्पमिताः शेषाद्यास्तु सभार्यकाः ।। ६.१५ ।।

विंशत्कल्पमितास्त्विन्द्रजीवाः द्विनवकल्पकाः ।
अहंप्राणपदार्हश्च गुर्वाद्याद्व्यष्टकल्पकाः ।। ६.१६ ।।

प्रवाहस्तु द्विषट्कल्पैः सूर्याद्याः दशकल्पकाः ।
मित्रादीनां च नवभिस्तूक्त शेषगणस्य तु ।। ६.१७ ।।

अष्टभिः सप्तभिः कल्पैः सनकादि गणस्य तु ।
षड्भिः पर्जन्यमारभ्य पुष्करान्तगणस्य वै ।। ६.१८ ।।

अपरोक्षतः कर्मदेवाः पञ्चकल्पापरोक्षिणः ।
चतुर्भिराजानजानान्तु सार्धकल्पत्रयेण तु ।। ६.१९ ।।

कृष्णाङ्गसङ्गगोपीनां त्रिभिः पितृगणस्य तु ।
गन्धर्वाणान्तु कल्पाभ्यां मर्त्यानां तु तथैकतः ।। ६.२० ।।

अर्धकल्पं तृणान्तानां योग्यानां हरिदर्शने ।
नियमोऽयंसर्वकल्पेष्वेवमेव न चान्यथा ।। ६.२१ ।।

क्ल्पसंख्या ब्रह्ममानाद्विज्ञेया योग्यचेतनैः ।
असुराणां तमःप्राप्तिः ब्रह्मणो दिनकल्पतः ।। ६.२२ ।।

भवत्येव जगद्धातुराज्ञयेत्थं सदैव तु ।
इन्द्रादिपुष्करान्तानां गुणोपासनयोचितैः ।। ६.२३ ।।

प्रोक्तैः कल्पैर्विमुच्यन्ते तावत्कल्पैस्तु साधनं ।
तत्पूर्वमपरोक्षस्य कर्तव्यमिति निश्चयः ।। ६.२४ ।।

अण्डान्तराले पद्मोत्थब्रह्मा यावद्धि तिष्ठति ।
तावत्संवत्सरगतप्रतिप्रतिदिनेष्वपि ।। ६.२५ ।।

सांशा अतात्विकाः सर्वे संख्यया वक्ष्यमाणया ।
मितास्तु प्रतिकल्पेऽपि पदस्था ह्यपरोक्षिणः ।। ६.२६ ।।

उर्वश्याद्याप्सरसः शतान्तांश्चाष्टसंख्यया ।
मिता आजानजैस्तुल्याः कर्मदेवैः समाः पराः ।। ६.२७ ।।

शतं पितृणां सप्तैव तेषूर्वश्यादिभिः समाः ।
अन्ये आजानजेभ्यस्तु न्यूनास्तेभ्योऽवराः क्रमाथ् ।। ६.२८ ।।

गन्धर्वास्तु शतं तेषु अष्टौ तुल्यास्तु कर्मजैः ।
शतकोटिमिताः सर्वे ऋषयो विंशदुत्तमाः ।। ६.२९ ।।

ऋषीणां च शतं कर्मदेवैस्तल्यमुदीरितं ।
हर्यावेशाश्च तन्मध्ये विंशदीषद्गुणोत्तमाः ।। ६.३० ।।

तेष्वेव तात्विकाश्चाष्टौ शतकं कर्मजैः समं ।
तदन्येऽजानजेभ्यस्तु तुल्या अग्निसुता अपि ।। ६.३१ ।।

द्व्यष्टौसहस्राणिशतन्त्रिंशच्चारणरक्षसां ।
साध्यसिद्धास्तथान्यास्तु सप्ततिः सर्वजातिषु ।। ६.३२ ।।

आजानजास्तेस्वन्यूनं पितृगन्धर्वसंयुताः ।
प्रतीकालम्बनाः सांशाः निरंशास्तु ततोऽवराः ।। ६.३३ ।।

प्रतीकालम्बनस्तेषु श्रेष्ठाः मानुषगायकाः ।

ततो न्यूनास्तु राजानो मर्त्योच्चास्तु ततोऽधमाः ।। ६.३४ ।।

मर्त्यगन्धर्वराश्यादि सर्वजीवगणेष्वपि ।
ये मुक्तियोग्यास्ते सर्वे प्रतीकस्थावलम्बिनः ।। ६.३५ ।।

निरंशा अपरोक्षात्प्राकूर्ध्वमप्यण्ड एव हि ।
सृज्यानूर्ध्वं यथा सांशाः अपरोक्षविवर्जिताः ।। ६.३६ ।।

अपरोक्षिणान्तु सांशानां तात्विकैर्भिन्नचेतसाम् ।
अतात्विकानां कर्मादि सुरगन्धर्वमानुषां ।। ६.३७ ।।

एतावदन्तजीवानां सूक्ष्माप्तिरनिरुद्धतः ।
अजोत्पत्तेः पुराजाण्डे स्थूलाप्तिरिति निश्चयः ।। ६.३८ ।।

तात्विकानां बहिश्चाण्डात्सूक्ष्मस्थूलाप्तिरिष्यते ।
असंसृष्टशरीरास्तेऽण्डोत्पत्तेः पुराःसुराः ।। ६.३९ ।।

अण्डान्तराले सर्वेऽपि संसृष्टाः स्थूलदेहकाः ।
लये सर्वे लिङ्गबद्धाः शून्यकुक्षा वसन्ति हि ।। ६.४० ।।

तेषु मुक्तेतरे संख्या नियमात्सृष्टिसंमताः ।
ये च तान्निखिलान्वासुदेवः स्रष्टुमुपाक्रमथ् ।। ६.४१ ।।

जडाख्या प्रकृतिः सर्वजीवानां लिङ्गरूपिणी ।
प्रकृतेर्गर्भगा जीवाः लिङ्गदेहयुता मताः ।। ६.४२ ।।

अनादिकालमारभ्य जीवाः संसृतिबन्धगाः ।
तत्र पूर्वानन्तकल्पे जीवाः सत्साधनेन च ।। ६.४३ ।।

मिश्रेण विपरीतेन ज्ञानेनात्यक्तबन्धनाः ।
जीवाश्च त्रिविधा आसन्शतकोटिसहस्रशः ।। ६.४४ ।।

सृज्येषु लिङ्गबद्धेषु पूर्वसृज्यश्चतुर्मुखः ।
न चैककाले सर्वेषां सृष्टिः सा कालभेदतः ।। ६.४५ ।।

भवत्यतः पूर्वजाताः उत्तमान्ये ततोऽवराः ।
लयाख्य परकालान्ते व्यतीते सृष्टिसंमते ।। ६.४६ ।।

परकालादिमेऽजस्य सृष्टिरन्यस्य कालतः ।
ब्रह्मणः सृष्टितः पश्चाद्वायोः सृष्टिः शताब्दतः ।। ६.४७ ।।

ततः शताब्दतो वाण्याः भारत्यास्तच्छताब्दतः ।
ततः सहस्राब्दतश्च सृष्टिस्तु विपशेषयोः ।। ६.४८ ।।

नीलादीनां सहस्रश्च वत्सरैस्तावता पुनः ।
वारुण्यादेर्दशसाहस्राब्दतस्तु ततः परं ।। ६.४९ ।।

सृष्टिरिन्द्रस्य कामस्याप्ययुताब्दास्तथापरे ।
सृष्टास्युर्हरिणा ये च नीचास्तेऽनुत्तमोत्तमैः ।। ६.५० ।।

पुष्करान्तास्तात्विकाश्च तथैवातात्विकाः परे ।
निरंशा नित्यबद्धाश्च तमोयोग्याश्च राक्षसाः ।। ६.५१ ।।

अयुताब्दाद्धेवमानात्पूर्वपूर्वव्यवस्थया ।
सृष्टिर्भवति सा सूक्ष्मस्थूलभेदाद्विधा मता ।। ६.५२ ।।

तात्विकानां पदस्थानां सर्वेषामपरोक्षिणां ।
अण्डात्पूर्वैव भवति तदन्येषां तदन्तरे ।। ६.५३ ।।

अण्डाद्बहिरथाण्डान्तर्जायमानजनस्य तु ।
पूर्वोक्तकालनियमात्सृष्टिः ज्ञेया यथाक्रमं ।। ६.५४ ।।

लिङ्गबद्धस्य तु यदा सूक्ष्मदेहाप्तिरिष्यते ।
ततः पूर्वक्षणे लिङ्गे गुणवैषम्यमिष्यते ।। ६.५५ ।।

लिङ्गदेहस्य मध्यस्थो रजोभागः प्रकीर्तितः ।
भूर्नामकेन्दिरा तत्र चेष्टका तस्य मानिनी ।। ६.५६ ।।

सत्वभागस्पृष्टरजः पार्श्वगा राजसाणवः ।
दशप्रलयकाले तु भूम्या सत्वस्य पार्श्वगाः ।। ६.५७ ।।

भवन्ति लयकालान्ते तत्र तिष्ठन्ति सर्वशः ।
राजसाणुः सात्विकांशगतस्त्वेकैकशः पृथक् ।। ६.५८ ।।

दशैव तादृशा एते मिलिता द्वादशाणवः ।
सात्विकेषु शतमितान्रक्तवर्णान्करोत्यलं ।। ६.५९ ।।

स्वभावतःसत्वभागाः शुक्लास्ते सत्वसंस्थिताः ।
रक्तासहस्रसंख्याकाः दशभीराजसाणुभिः ।। ६.६० ।।

भवन्ति च रजः स्पृष्टाः सत्वपार्श्वगता लये ।
एवमेको राजसाणुः राजसांशापसव्यगं ।। ६.६१ ।।

तामसांश भुवानीतः स्वशतांशन्तु तामसं ।
अत्यल्पं नीलवर्णं ते रक्तोरक्ती करोत्यलं ।। ६.६२ ।।

एकः शुद्धो राजसांशः परिच्छेदे तु राजसे ।
मध्ये तिष्ठन्त्यपि लये राजसाणु समा इमे ।। ६.६३ ।।

तमः परिच्छेदगताः तामसाणुस्तु यादृशाः ।
लये सत्वपरिच्छेदपार्श्वगा राजसाणवः ।। ६.६४ ।।

तामसास्तादृशा एते मिलिता द्वादशाणवः ।
राजसा तामसात्यल्प परमाणु प्रमाणतः ।। ६.६५ ।।

अधिकं गुणितास्तत्र शतद्वादशसंमिताः ।
दशराजससंयुक्त सहस्रसात्विकाणवः ।। ६.६६ ।।

लक्षाभवन्ति कार्योपयुक्ता एते भवन्ति हि ।
तामसात्तु परिच्छेदाद्विगुणो राजसस्मृतः ।। ६.६७ ।।

राजसात्तु परिच्छेदा द्विगुणःसात्विकः स्मृतः ।
एकैकस्मन्परिच्छेदेप्यनन्ताः परमाणवः ।। ६.६८ ।।

सन्ति तत्र नियन्ताजो विष्णुब्रह्मशिवात्मकः ।
नारायणोनन्तगुणः श्री स्त्रीरूपाभिमानिनी ।। ६.६९ ।।

जडायां प्रकृतौ चापि लिङ्गदेहे तथैव च ।
सन्त्यानन्ताणवस्तेषु पूर्वोक्ताः कार्यसाधकाः ।। ६.७० ।।

सत्वङ्गता राजसांशाः लये राजससात्विकान् ।

वदन्ति तामसगतं रजोराजसतामसं ।। ६.७१ ।।

रजः परिच्छेदगतं सन्तो राजसतामसं ।
वदन्त्येव लये योगो भवति श्रीहरीच्छया ।। ६.७२ ।।

साम्यावस्थां बुधाः प्राहुः एतां प्रकृतिलिङ्गयोः ।। ६.७३ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे षष्ठोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ७



---

श्रीहंस उवाच

नारीकेलफलाकारो लिङ्गदेहस्त्रिवृन्मतः ।
मूर्ध्निच्छिद्रयुतो गर्भावकाशकलितः सदा ।। ७.१ ।।

अन्तर्निबद्धा जीवास्ते त्रिविधा अपि मोचने ।
न शक्तः रमयाश्चन्न मूर्ध्निच्छिद्रावसन्त्यलं ।। ७.२ ।।

दुःखस्पृष्टा लिङ्गबद्धाः दुःखास्पृष्टा रमैव हि ।
यस्मन्नकाले यस्य सूक्ष्मः नाशो भवति विष्णुना ।। ७.३ ।।

अनिरुद्धेन तन्नीच क्रमतोन्डान्तरे बहिः ।
तदुत्तरक्षणे लिङ्गदेहे च गुणसाम्यता ।। ७.४ ।।

भूम्याकृता भवति सा (स्वरूपज्ञानरूपिणी)जीवानां ज्ञानरोधिनी ।
स्वारूपिकज्ञानसुखे प्रयत्नेच्छाः सतां लये ।। ७.५ ।।

रुद्धा भवन्ति साम्ये तु वैषम्ये व्यक्तिमञ्जसा ।
यान्त्यवस्थाद्वयं लिङ्गे लये सृष्टौ क्रमात्किल ।। ७.६ ।।

क्षणक्षणेन भ्रमतां स तां सव्येन चान्यथा ।
भ्रमतां लिङ्गदेहस्थगुणत्रयसुयोगतः ।। ७.७ ।।

सृष्टिकाले त्रिधाभिन्ना जीवानां बुद्धिरिष्यते ।
सात्विकी राजसी चेति तामसीति समस्तशः ।। ७.८ ।।

योग्यानां सात्विकीबुद्धिः बहुला अन्येऽल्पके मते ।
मध्यमानान्तु जीवानां राजसी तामसी मतिः ।। ७.९ ।।

क्रमात्बहुतरेऽन्येतु स्वल्पमात्रे भविष्यतः ।
पञ्चमात्रागताज्ञानपञ्चकं लिङ्गदेहगं ।। ७.१० ।।

अनाद्यज्ञानमुद्दिष्टं बाह्यमस्वारूपिकं तु तत् ।
साक्षीन्द्रियाणां (तमसा)मनसा योगे तद्धि भविष्यति ।। ७.११ ।।

साक्षीन्द्रियाणां सत्वस्थमनसा सङ्गमो यदि ।
बाह्या स्वारूपिकञ्ज्ञानं त्रिविधानां चितामिह ।। ७.१२ ।।

साक्षीन्द्रियाणां रजसा मनसा सङ्गमो यदि ।
बाह्यमस्वारूपिकं च कामक्रोधादिकं च यथ् ।। ७.१३ ।।

अनादिकामो जीवानां त्रिविधानां भविष्यति ।
रजः परिच्छेदगताः ज्ञानेन्द्रियकलाः यदि ।। ७.१४ ।।

साक्षीन्द्रिययुताबाह्यशब्दादीच्छा भविष्यति ।
अनादिकामःसा प्रोक्ता त्रिविधानां चितामिह ।। ७.१५ ।।

रजः परिच्छेदगताः कर्मेन्द्रियकलाः यदि ।
साक्षीन्द्रियुताः कर्मजनयन्त्यप्यनादिकं ।। ७.१६ ।।

बाह्यलिङ्गगतं कर्म न तु स्वारूपिकं मतं ।
अनाद्यविद्याकामौ चानादि कर्म च लिङ्गगं ।। ७.१७ ।।

मदीयमितिमत्वा तु बद्धो भवति चेतनः ।
कालेन भारते वर्षे लब्धजन्मापि मानुषं ।। ७.१८ ।।

ब्राह्मण्यं सद्गुरोः सङ्गं भक्तिज्ञानेधिगम्य च ।
प्रसादात्श्रीहरेः कर्म देवतानामथान्तरे ।। ७.१९ ।।

अण्डाद्बहिस्तात्विकानां वैकुण्ठपरिघालये ।
अण्डखर्परसंस्पृष्ट श्रीभागेवा हरीच्छया ।। ७.२० ।।

परान्त्यवृत्तिपरितः स्थितेवारि निमज्य च ।
अभिव्यक्तस्वरूपाणां सतां लिङ्गविपर्यये ।। ७.२१ ।।

हरीरमासुराद्वेषाद्धारते मर्त्यजन्मनि ।
दुःसङ्गवृद्धातण्डान्तर्लिङ्गदेहस्य नाशने ।। ७.२२ ।।

सतिवायोर्गदाघातादसतां कालयोगतः ।
अनाद्यविद्याकामौ चानादिकर्मापि नश्यति ।। ७.२३ ।।

अतो बाह्यं न स्वरूपा अविद्याद्याः प्रकीर्तिताः ।
ज्ञानाज्ञाने स्वरूपस्थे नित्ये नैव च नश्वरे ।। ७.२४ ।।

अनाद्यविद्याकामाद्याः साम्यावस्था यदा भवेत् ।
तदा जीवस्य सर्वस्य न भवन्ति कदाचन ।। ७.२५ ।।

राजसाणुशतांशाभाः द्विषट्कास्तामसाणवः ।
लये तेषु रजस्येकः सत्वपार्श्वगतादश ।। ७.२६ ।।

भवन्त्येकस्तमो मध्ये संस्थितो भवति ध्रुवं ।
रजोगतोणुस्तमसः सतो द्विगुणराजसं ।। ७.२७ ।।

राजसाणुशतांशाभाः सत्वगास्तामसाणवः ।
दशापिदशतोत्कृष्टान्सात्विकाणून्लये ध्रुवं ।। ७.२८ ।।

नीलीकुर्वन्त्येवमेषा साम्यावस्था प्रकीर्तिता ।
तामसी राजसी चेति साम्यावस्था द्विधा मता ।। ७.२९ ।।

साम्यावस्था सात्विके तु न क्वापि किल विद्यते ।
द्वाभ्यान्तु साम्यवस्थाभ्यां लिङ्गस्ताभ्यां जनस्य तु ।। ७.३० ।।

लये सर्वस्य तां निद्रां नाशं प्राहुर्मनीषिणः ।
यदा योगेच्छोपरमः तदा ज्ञापयति प्रभुः ।। ७.३१ ।।

अयोग्येच्छा प्रयत्नादि कर्तुराशां छिनत्ति च ।
वैषम्ये सति लिङ्गे तु जननेच्छा हि जायते ।। ७.३२ ।।

यदेच्छा जायते जन्तोस्तदा सृजति तं प्रभुः ।
सृज्यानां सर्वजीवानां अण्डाद्बहि रथान्तरे ।। ७.३३ ।।

नैकदा विषमावस्था ह्यजादीनां क्रमाद्भवेत् ।

व्युत्क्रमात्पूर्वमानेन अण्डान्तर्बहिरेव च ।। ७.३४ ।।

साम्यावस्था च नीचानां प्राक्पश्चादुत्तमस्य च ।
लये सत्वप्रविष्टा ये दशते राजसाणवः ।। ७.३५ ।।

स्वशताधिकसत्वस्थपरमाणु समन्विताः ।
सृष्टिकाले श्रियानुन्ना रजो भागं विशन्ति हि ।। ७.३६ ।।

तमः परिच्छेदगत राजसाणुर्लये तु यः ।
स्वशतांशं तामसाणुं गृहीत्वा दुर्गयेरितः ।। ७.३७ ।।

रजोभागं प्रविशन्ति सृष्टिकाले समागते ।
लये रजोभागमध्यगतोणू राजसस्य यः ।। ७.३८ ।।

रजो मध्ये व्यक्तिमेति सृष्टिकाल उपागते ।
प्रकृतौ लिङ्गदेहोऽपि एवं यदि गुणस्थितिः ।। ७.३९ ।।

साम्यावस्थां जगुः प्राज्ञाः तया सृष्टिर्भविष्यति ।
लये सत्वप्रविष्ठा ये दशैतत्तामसाणवः ।। ७.४० ।।

राजसाणु शतांशाभाः सात्विकैः स्वसमाणुभिः ।
युक्तास्तामस भागं हि विशन्ति श्रीसमीरिताः ।। ७.४१ ।।

रजोविष्टस्तामसाणुः पूर्वाणु(सत्वेण)तुलितः स्वयं ।
स्वतो(सत्वाच्च) द्विगुणेनैव संयुक्तो राजसाणुना ।। ७.४२ ।।

तत्र स्थित्वा लये भूयः सृष्टिकाल उपागते ।
भुवानुन्नः तमोभागं विशन्ति श्रीहरीच्छया ।। ७.४३ ।।

एकशुद्धस्तामसाणुः पूर्वैस्तामससात्विकैः ।
दशाभिश्चैकतमसा तथा राजसतामसं ।। ७.४४ ।।

प्राप्यसंमिलिताःसर्वे तमो वैषम्यनामकं ।
सहस्रसात्विकाणुभ्यः दशराजसकाणुभिः ।। ७.४५ ।।

शुद्धेन रजसैकेन रजसायुक्त तामसः ।
अणुर्यदैकीभवति रजो वैषम्य उच्यते ।। ७.४६ ।।

रजो वैषम्यतः सृष्टिः तमो वैषम्यतो लयः ।। ७.४७ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे सप्तमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ८



---

श्रीहंस उवाच

व्यतीते लयकाले तु सृष्टिकाल उपागते ।
परकालादिमादौ तु पुरुषः सर्वचेतनान् ।। ८.१ ।।

वासुदेवेर्पयल्लिङ्गबद्धान्जीवान्(सृज्यान्)विलक्षणान् ।
तारतम्ययुतान्स्वयोग्यतां कलितांश्च सः ।। ८.२ ।।

स्वस्वोचितमहायत्नाभिमुखान्स्वस्वकर्मणा ।
जन्मलाभोचितान्वासुदेवस्थान्वीक्ष्य चिन्तयन् ।। ८.३ ।।

सृष्टिकालाद्यनिमिषसूक्ष्मदेहोचितं ह्यजां ।
लिङ्गबद्धन्तु तत्पूर्वक्षणवैषम्यसंगतः ।। ८.४ ।।

एकं गृहीत्वान्यजीवान्प्रादात्सङ्कर्षणो विभुः ।
स वायुमेकं लिङ्गे तं गृहीत्वान्यान्सुचेतनान् ।। ८.५ ।।

प्रद्युम्नोऽदात्तयोर्भार्ये स गृहीत्वा सलिङ्गके ।
तदन्यान्तात्विकान्सर्वपदस्थान्भावितात्विकान् ।। ८.६ ।।

व्यक्तापरोक्षिणः संख्या नियमात्सूक्ष्मयोगतः ।
स्रष्टुं प्रादात्सचरमे अनिरुद्धोऽखिलेश्वरः ।। ८.७ ।।

वासुदेवो विरिञ्चस्य लिङ्गदेहं व्यचालयत् ।
तत्तलिङ्गदेहस्थत्रिगुणेभ्यस्त्रिबिन्दवः ।। ८.८ ।।

न्यपतन्तत्र योबिन्दुः सात्विकः स तु निर्मलः । ।

रजो वैषम्यसंयुक्त रजोबिन्दुस्तथापतथ् ।। ८.९ ।।

तमो वैषम्यकलितस्तमोबिन्दुरभूत्ततः ।
रजोबिन्दुगतो विष्णूरजोवैषम्यमूर्जितं ।। ८.१० ।।

पृथक्स्थाप्य रजोबिन्दुं शुद्धं चक्रे जगद्गुरुः ।
तमोबिन्दुगतोदेवः तमोवैषम्यमुत्कटं ।। ८.११ ।।

समुधृत्य पृथक्स्थाप्य तं बिन्दुं शुद्धमातनोत् ।
ततो माया प्रार्थितः सन्वासुदेवस्तदादिमः ।। ८.१२ ।।

तद्रजोगुणवैषम्यलिङ्गबद्धमजं विभुः ।
अजस्य सूक्ष्मदेहाप्त्यै रजोवैषम्यमूर्जितं ।। ८.१३ ।।

निक्षिप्य च निगीर्येशोमायायां महदाह्वयं ।
सूक्ष्मरूपं तु तद्वीर्यं प्राकृतं प्राक्षिपद्धरिः ।। ८.१४ ।।

तत्र सा सुषुवे सूक्ष्मदेहवन्तमजं विभुं ।
गुणत्रयाणवः पूर्वं सांख्या नियमतः स्थिताः ।। ८.१५ ।।

यावन्तस्ते सदा नित्याः तेषां नाशो न विद्यते ।
तत्र सत्वाणवः सर्वे दशधोपचिताः सदा ।। ८.१६ ।।

भवन्ति राजसास्तामसाणवः पादमात्रतः ।
भवन्त्युपचिता वायुसरस्वत्यादि सूक्ष्मगाः ।। ८.१७ ।।

सत्वादयस्तु दशधा ऊर्जिताःसम्भवन्ति हि ।
त्रृणादीनां सूक्ष्मगतानधिकाः प्रभवन्ति हि ।। ८.१८ ।।

सत्वाणवो राजसाश्च तामसाह्यणवश्च ये ।
ऋजूनां सूक्ष्मगाः पादोपचिताः प्रभवन्ति हि ।। ८.१९ ।।

सांशाःसर्वेषु सांशेषु सूक्ष्मदेहेषु कृत्स्नशः ।
सत्वाणवो दशाधिक्यं यान्त्येवोपचितौ सतां ।। ८.२० ।।

रजस्तमाणवस्तूच्चेष्वल्पनीचेषु चाधिकाः ।
तद्रजोगुणवैषम्यमादायाद्यानुजः स्वयं ।। ८.२१ ।।

सर्वेषां सूक्ष्मदेहानां अन्ते वसति नाशकृत् ।
सत्वंरजस्तमः सृष्टं विष्णुब्रह्मशिवात्मकं ।। ८.२२ ।।

श्रीभूदुर्गापतिर्विश्वतैजसप्राज्ञनामकाः ।
शुक्लरक्तात्मिकानीला आदायानन्तरूपकः ।। ८.२३ ।।

तत्तत्सूक्ष्मशरीरस्थस्थानत्रयगतो हरिः ।
तदा ह्यवस्था त्रितयं तद्विशेषादिमे सुखं ।। ८.२४ ।।

एकोनविंशतिमुखौ विश्वतैजसनामकौ ।
सव्यापसव्यगान्येवं पुरुषास्यानिमध्यगं ।। ८.२५ ।।

गजाभं तु तयोरस्याः मुखानां कृत्यमप्युत ।
दक्षिणाक्षिस्थितो विश्वः सत्वस्थः सत्वभागतः ।। ८.२६ ।।

उत्तमानां मध्यमानां नीचानां तत्वमानिनां ।
त्रिभिर्मुखैः सत्वगतैः अवस्थां जाग्रदाह्वयां ।। ८.२७ ।।

करोत्ययं मध्यगाख्य त्रितयेन स एव हि ।
उच्चमध्यावरामर्त्यदासानां जाग्रदाह्वयां ।। ८.२८ ।।

करोत्यवस्थामन्तस्थैः त्रिभिरास्यैः स एव हि ।
निरंशानां च जीवानां जाग्रतां सम्प्रवर्तकः ।। ८.२९ ।।

पुंसामेवं वामगास्यैः स्त्रीणामेवं करिष्यति ।
अनन्तानन्तजन्मोरु मर्त्यदेहैः कृतानि तु ।। ८.३० ।।

जाग्रद्धशायां मनसा वाचका येन चेन्द्रियैः ।
कृतानि सात्विकादीनि कर्माण्युच्यावचानि च ।। ८.३१ ।।

यानि यान्यपि सर्वाणि संचिन्तान्यपि तेष्वलं ।
नष्टेषु तददृष्टानि लिङ्गानि निवसन्त्यलं ।। ८.३२ ।।

तेषु भोगाय दत्तानि भुक्त्वा नाशं प्रयान्ति हि ।
भोगाय च प्रदत्तानि अर्धभुक्तानि सर्वशः ।। ८.३३ ।।

प्रारब्धानि च तेष्वेव कानिचिद्भोगतः क्षयं ।
यान्ति प्रारब्धशिष्टानि अपरोक्षे सतिस्फुटं ।। ८.३४ ।।

न नयान्ति च सर्वाणि भोगयोग्यान्य संशयः ।
तत्र दुष्प्रारब्धजातं बह्वल्पं करोत्यजः ।। ८.३५ ।।

भगवद्भक्ति योगेन हरेरिच्छा हि तादृशी ।
हरिणा जीवभोगाय न दत्तानि ह्यनन्तशः ।। ८.३६ ।।

राशीकृतानि लिङ्गस्थकर्मादृष्टानि कोटिशः ।
सञ्चितान्यपि तानीह अपरोक्षे सति स्फुटं ।। ८.३७ ।।

दग्धान्यपि विनष्टानि भवन्त्येव न संशयः ।
मर्त्यो जीवन्भारतेस्मिन्नित्यं कोटिसहस्रशः ।। ८.३८ ।।

करोति विवशो बद्धः प्रकृत्यातान्यनन्तशः ।
अनन्त जन्मनानन्तानन्तायुः परिमाणतः ।। ८.३९ ।।

कृतान्यभुङ्क्तस्वकृतकर्मणां भोगतो लयः ।
सञ्चितानामनन्तोरु ब्रह्मकालैरपि क्वचिथ् ।। ८.४० ।।

क्वापि नो घटते भोक्तुं किन्तु श्रीविष्णुदर्शने ।
नैषां फलं हि जीवानां भवेदित्याज्ञया हरेः ।। ८.४१ ।।

लिखितान्यपि पत्रेषु चित्रगुप्तैः पुनः पुनः ।
रमाब्रह्मादयो देवाः सर्वकर्माभिमानिनः ।। ८.४२ ।।

यच्छन्ति न फलं पुण्यं पापं वा तस्य कर्हिचित् ।
च्छित्वा लिखितपत्राणि यमदूतैर्हरिः प्रियैः ।। ८.४३ ।।

बोधयन्त्यपि हे जीव न ते सञ्चिततो भयं ।
इति कारणतो नाशं सञ्चितस्य वदन्ति हि ।। ८.४४ ।।

घटादिनाशवन्नाशः कर्मणां नैव शस्यते ।
सुप्रारब्धस्य सर्वस्य भोगादेव परिक्षयः ।। ८.४५ ।।

अपरोक्षानन्तरन्तु कृतं कर्म शुभाशुभं ।

आगामीत्युदितः सद्भिर्नतलोपो भविष्यति ।। ८.४६ ।।

न लिखन्ति पटे चित्रगुप्तास्तानि सुरोत्तमाः ।
यच्छन्ति न फलं तेषामतो न श्लिष्यते जनः ।। ८.४७ ।।

आगामिकर्मभिस्तच्चानिष्टं काम्यं हि राज(क्ष)साः ।
गृह्णन्तीष्टं काम्यपुण्यं तदिष्टाः प्राप्नुवन्ति हि ।। ८.४८ ।।

आगामि विष्णुद्वेषादि कलिर्गृह्णाति नेतरः ।
आगामि भक्तितो मुक्तो प्राप्तव्यानन्दमश्नुते ।। ८.४९ ।।

वेदोक्तमप्यवेदोक्तं ज्ञानाज्ञानादिभिः कृतं ।
बाल्ययौवनवार्धिकैः कृतं वाक्कायमानसैः ।। ८.५० ।।

भीत्या प्रीत्या आवेशतो वा कृतं कर्म शुभाशुभं ।
ज्ञायन्नेव करोत्येषः भुङ्क्ते जागृद्धि तत्फलं ।। ८.५१ ।।

समस्त भूतले वापि विवरेष्वन्तरिक्षके ।
स्वर्गादि सर्वलोकेषु ब्रह्माण्डाद्बहिरन्तरे ।। ८.५२ ।।

निरये वा तमसि वा वैकुण्ठादिषु वा जनः ।
जाग्रद्भुङ्क्ते कर्मफलं विश्वाधीनः सदैव हि ।। ८.५३ ।।

आनन्तासनवैकुण्ठश्वेतद्वीपेषु संस्थिताः ।
महरादिषु सत्यान्तलोकेष्वण्डाद्बहिस्तथा ।। ८.५४ ।।

तात्विकाः स्वाधिकारेषु नियता नेतरे जनाः ।
स्वप्रारब्धफलं यान्ति ते सर्वे ह्यपरोक्षिणः ।। ८.५५ ।।

अतात्विका निरंशानां योग्यानां क्वापि कर्हिचित् ।
नाधिकारस्त्वयोग्यानां किं वाच्यं दुःखभोगिनां ।। ८.५६ ।।

रियुः त्रीन्कर्मणा लोकान्ज्ञानेनैव तदुत्तरान् ।
तत्र मख्या हरिं यान्ति तदन्ये वायुमेव तु ।। ८.५७ ।।

अपक्वा ये न ते यान्ति वायुं वा हरिमेव वा ।
स्थानमात्राश्रितास्ते तु पुनर्जनि विवर्जिताः ।। ८.५८ ।।

ज्ञानगम्येषु लोकेषु अण्डान्तर्महरादिषु ।
अतात्विकनिरंशानां मुक्तान्तानां क्रमोन्नतां ।। ८.५९ ।।

वासः प्रारब्धपुण्येन निष्कामो न भविष्यति ।
आतात्विकनिरंशानां सर्गमर्त्याधमेष्वपि ।। ८.६० ।।

स तात्विकानां प्ररब्धात्पुण्यात्पापाच्च संचितात् ।
भोगदत्तात्पुण्यपापात्सुखदुःखादि शस्यते ।। ८.६१ ।।

तिर्यग्योनिषु गर्भेषु वासेभ्येषां प्रकल्प्यते ।
निरंशनीचसांशानां नरके वास इष्यते ।। ८.६२ ।।

प्रारब्धतः सञ्चिताद्वा न योग्यानां तमोगतिः ।
अयोग्यानां द्वेषपाकात्तमः प्राप्तिर्भविष्यति ।। ८.६३ ।।

देवगन्धर्वपर्यन्ताः देवशब्दोदिताः क्रमात् ।
देवानां निरयो नैव तमश्चापि कथञ्चन ।। ८.६४ ।।

ना सुराणां तथा मुक्तिः कदाचित्केनचित्क्वचित् ।
भारताद्यष्टवर्षेषु सप्तद्वीपेषु चाद्रिषु ।। ८.६५ ।।

सर्वेषां पापपुण्यैश्च मुख्यप्रारब्धसञ्चयैः ।
तमो मिथ्याज्ञानयोगात्ज्ञानेनैव हरेः पदं ।। ८.६६ ।।

तेषां प्रागुक्त कर्मोत्थ फलं वै जाग्रता भवेत् ।
जाग्रत्प्रवर्तको विश्वः सोऽज दक्षाक्षिगो भवेथ् ।। ८.६७ ।।

लिङ्गोत्थ सत्वमादाय तत्सूक्ष्मस्थ तथा चरन् ।
न धातुः सञ्चितं काम्यं न दृष्टं पातकादिकं ।। ८.६८ ।।

न दैन्यावेशदुःखादि न संशयविपर्ययौ ।
न दुरिच्छानान्यरतिः न भोगेच्छा कुसङ्गतिः ।। ८.६९ ।।

न देहाभिमतिर्नासत्पथे देहेन्द्रियोद्गतिः ।
निष्काम्यकर्मसज्ञानसद्भक्तिषु सदारतिः ।। ८.७० ।।

ब्रह्मणो हि परस्यास्य प्रसादात्सर्वदासुखं ।
स्वप्ननिद्राव्याधिपूर्वं तच्च दुःखफलं त्यजेथ् ।। ८.७१ ।।

सोन्तरङ्गो हरेः साक्षात्सर्वोत्कृष्ट प्रियो मतः ।
पक्वशेषादिभिर्दृश्यमापरोक्षेण केशवं ।। ८.७२ ।।

अनादिकालमारभ्य अजजीवगणाः सदा ।
पश्यन्त्यात्मोचितहरेरपरोक्षाय जन्मभिः ।। ८.७३ ।।

यतन्तेशतकल्पान्त्यैः दृष्ट्वेशं शतकल्पकैः ।
कृतयानन्तवेदोक्त गुणोपासनया पदं ।। ८.७४ ।।

प्राप्नोति तस्य सूक्ष्मापिर्वासुदेवात्तदाभवत् ।
तद्धेहलिङ्गजं शुद्धं रज आदाय तेजसः ।। ८.७५ ।।

तत्सूक्ष्मकण्ठे वसति स्वप्नकृद्भगवान्हरिः ।
एकादशेन्द्रियैः कर्मकर्तव्यमिति वासना ।। ८.७६ ।।

मनस्युत्पद्यते तच्च न करोति प्रयत्नतः ।
निद्राज्ञानोन्मादभयरोगायासा विदुन्मतैः ।। ८.७७ ।।

अनुकूला भावताव(भवत्येव) जन्मजन्मान्तरेष्वपि ।
अकृतानां कर्मणान्तु स्वप्नः(प्न)स्येशफलप्रदः ।। ८.७८ ।।

स्वप्नदृष्टा अनन्तार्थास्तत्काल सुखदुःखदाः ।
न जाग्रदृष्टिपथगाः किन्तु तत्काल कल्पिताः ।। ८.७९ ।।

स्वप्ने स्वस्थस्य जीवस्य वासनानन्त्यमीश्वरः ।
उपादानीकृत्यमुख्यैः पूर्वोक्तैरेव तैजसः ।। ८.८० ।।

कल्पयित्वा बहूनर्थान्दर्शयत्यखिलेश्वरः ।
स्वप्नः सत्यस्ततो यस्मात्भावीनफलसूचकः ।। ८.८१ ।।

शेषादिसर्वजीवानां योग्यकाले तथा चरन् ।
तैजसः स्वप्नकृच्चेति जनस्य स्वप्नकृद्भवेथ् ।। ८.८२ ।।

तत्तमोगुणमादाय प्राज्ञस्तसूक्ष्महृद्गतः ।

जीवस्य लिङ्गबद्धस्य पादस्थस्य जगद्गुरोः ।। ८.८३ ।।

ध्यानावस्थां ददात्येवमेकास्यो देह्वयोनितः ।
लिङ्गबद्धं ग्रसन्नर्धं मूर्छावस्थां प्रयच्छति ।। ८.८४ ।।

लिङ्गबद्धं मुखेस्थाप्य प्राज्ञोत्यल्पोन्यरूपतः ।
यदाश्लिष्यति तं देवः तदा निद्रां प्रयच्छति ।। ८.८५ ।।

प्राज्ञो जीवेश्वरस्तं वै विना जीवोक्षमः स्मृतः ।
प्राज्ञः कण्ठस्थितं प्राप्य जीवानां स्वप्नदो भवेथ् ।। ८.८६ ।।

जीवं गृहीत्वा दक्षाक्षिगतोसौ जग(जागृ)दीश्वरः ।
न प्राज्ञतेजसौ धातुः स्वप्ननिद्रा प्रवर्तकौ(का ?) ।। ८.८७ ।।

ध्यानावस्थां विना तस्य तत्तद्दुष्कर्म वर्जनात् ।
प्राज्ञं जीवेश्वरं प्राहुः स सर्वहृदिसङ्गतः ।। ८.८८ ।।

सांशजीवं स वै प्राज्ञो रूपैण्यैकेन पादयोः ।
हृदिसंस्थाप्य सूक्ष्मान्यरूपेणादाय चेतनं ।। ८.८९ ।।

सलिङ्गं स यदा विश्वे नैकीभूतो भविष्यति ।
सोणुः प्राज्ञोहृदिस्थेन एकीभूतो भवेद्यदि ।। ८.९० ।।

ध्यानावस्थां सञ्जनयत्यपि जीवपतिप्रभुः ।
विश्वादयो निरंशानां अवस्था त्रितयप्रदाः ।। ८.९१ ।।

विना ऋजून्सर्वसुरान्भुविजातान्जगद्गुरुः ।
अवस्थात्रयसंयुक्तान्कुर्वन्ति प्राज्ञपूर्वकाः ।। ८.९२ ।।

ऊर्ध्वलोकस्थितानान्तु सदा जागृत्प्रवर्तकः ।
एवं सूक्ष्मशरीरेण ब्रह्माणमसृजद्विभुः ।। ८.९३ ।।

एवं सङ्कर्षणो वायोः जयायां सूक्ष्मदेहकृत् ।
वासुदेवः सरस्वत्याः ब्रह्माणमकरोत्पतिं ।। ८.९४ ।।

सङ्कर्षणस्तु भारत्याः मुख्यप्राणं व्यधात्पतिं ।
सरस्वत्याश्च भारत्याः प्रद्युम्नः सूक्ष्मदेहकृथ् ।। ८.९५ ।।

तयोस्ताभ्यां सूक्ष्मतनू विपशेषौ बभूवतुः ।
सूत्रनामा तदावायुः ब्रह्मा पुरुषनामकः ।। ८.९६ ।।

वेदादि सर्वनित्यानां अर्थानां जीवसन्ततेः ।
नित्यानामपि सृष्टौ हि तावुभावाभिमानिनौ ।। ८.९७ ।।

ते भार्ये तौ विनाकश्चनार्थोपि स्थितिमर्हति ।
ब्रह्मा निरभिमानित्वात्शरीर्यप्यशरीरवान् ।। ८.९८ ।।

अशरीरो वायुरभ्रं विद्युदित्यादि नामभिः ।
परशुक्लत्रयं वाच्यं योगात्ते सर्वमानिनः ।। ८.९९ ।।

अथानिरुद्धः कालेन ब्रह्मवाय्वोः सभार्ययोः ।
त्रिचतुस्त्वेकविंशत्यवारं सूक्ष्मशरीरकृथ् ।। ८.१०० ।।

त्रिवारमेकविंशत्सवारं सूक्ष्म(तनुप्रदः)तनुं प्रदात् ।
अनिरुद्धो विपादीनां नीलादीनां तथैव च ।। ८.१०१ ।।

सौपर्ण्यादि त्रयाणाञ्च कालदेशक्रमेण च ।
इन्द्रादि पुष्करान्तानां तात्विकानां अशेषतः ।। ८.१०२ ।।

एकविंशतिवारन्तु अनिरुद्धस्तु सूक्ष्मकृत् ।
यदा यस्य च सूक्ष्माप्तिस्तत्पूर्वक्षण एव च ।। ८.१०३ ।।

तत्तज्जीवगणस्यासु लिङ्गवैषम्यमित्यपि ।
पञ्चसप्तभिर्मासैर्बाह्यमानेन सर्वशः ।। ८.१०४ ।।

तात्विकानां तु देवानां सूक्ष्मसृष्टिरभूद्धरेः ।
ततो स सत्वतमसः वैषम्यावस्थयायुतां ।। ८.१०५ ।।

जडाख्यां प्रकृतिं सम्यक्चेष्टयामास विश्वसृट् ।
ततो बिन्दुत्रयं जातं सत्वं चेति रजस्तमः ।। ८.१०६ ।।

ऊर्ध्वदेशे सत्वबिन्दुः रजोबिन्दुस्ततोप्यधः ।
तदधोभूत्तमो बिन्दुः स्थूलश्चाद्यास्त्रिबिन्दवः ।। ८.१०७ ।।

श्रीभूदुर्गेति रूपा मा क्रमात्रिगुणमानिनी ।
विष्णुब्रह्माशिवश्चेति बिन्दुक्रमनियामकाः ।। ८.१०८ ।।

ब्रह्मवायू सभार्यौ द्वौ त्रिरूपावभिमानिनौ ।
सत्वादिबिन्दुषु श्रीश्च श्रिता नश्वरेषु वै ।। ८.१०९ ।।

रजस्तमो बिन्दुगतवैषम्ये जगदीश्वरः ।
ब्रह्मा सङ्कर्षणात्मा तु समुधृत्य ररक्षतुः ।। ८.११० ।।

ततो विष्णुः सत्वबिन्दुगतः संवर्धयत्यजः ।
सत्वावरणमाद्यं च चक्रे तत्र वृतोद्यमं ।। ८.१११ ।।

रजोविन्दुगतो ब्रह्मनामकस्तदधस्तने ।
देशे द्वितीयावरणं राजसस्यैव नामकं ।। ८.११२ ।।

तमोबिन्दुस्थितो रुद्रस्तामसावरणं व्यधात् ।
तद्धि द्वितीयावरणं रजसस्यैव गर्भगं ।। ८.११३ ।।

विष्णुब्रह्मशिवौ द्वौ द्वौ ब्रह्मवायू सभार्यकौ ।
श्रीभूदुर्गास्वाद्यमाद्य तृतीयावरणेषु हि ।। ८.११४ ।।

तत्तदात्मस्थूलदेहत्रिगुणेष्वभिमानिनौ ।
आद्यं शुक्लं द्वितीयं तु रक्तं नीलं तृतीयकं ।। ८.११५ ।।

रजोगुणस्यवैषम्या त्रिगुणावरणान्तरे ।
महदावरणं चक्रे ब्रह्मनामा स भूपतिः ।। ८.११६ ।।

चतुर्थावरणं तत्र विष्णुब्रह्मशिवात्मकः ।
जाताभ्यां ब्रह्मवायुभ्यां जतौ द्वौ द्वौ त्रिरूपकौ ।। ८.११७ ।।

सभार्यौ ब्रह्मवायू च महत्तत्वाभिमानिनौ ।
महत्तत्वनियन्तेशः आनन्दाख्यो हरिः स्वयं ।। ८.११८ ।।
आनन्दनाम्नस्तनयौ ब्रह्मवायू महद्गतौ ।
रजोगुणस्य वैषम्यात्सर्वांशेन मतः कलाः ।। ८.११९ ।।

राजसांशेनेन्द्रियाणां दशानां च कलास्तथा ।
तामसांशेन तन्मात्राः कलाः पञ्चमहद्गताः ।। ८.१२० ।।

अभवन्ताः कला नित्यं षोडशापि सदातनः ।
महत्तत्वाद्विकुर्वाणाद्ब्रह्मणः स्थूलदेहतः ।। ८.१२१ ।।

आनन्दवशगाज्जातस्त्वहङ्कारस्त्रिवृन्मतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ।। ८.१२२ ।।

उद्यद्रविप्रभावत्वान्महताहं त्रिवर्णकः ।
वैकारिकस्तु सत्वांशजातः शुक्ल उदहृतः ।। ८.१२३ ।।

तैजसो राजसांशोत्थः रक्तवर्णः प्रकीर्तितः ।
मनो हृषीकाणि मात्राः पूर्वं सूक्ष्मस्वरूपतः ।। ८.१२४ ।।

महत्तत्वगताह्येता अहङ्काराश्रिताः क्रमात् ।
गायत्रीशो विधिः सत्वे विरिञ्चस्तु रजोगुणे ।। ८.१२५ ।।

सावित्रीशो भवत्यद्धा तमसि ब्रह्मनामकः ।
सरस्वतीशो वसति तादृग्रूपत्रयोत्थितौ ।। ८.१२६ ।।

त्रिरूपौ वै ब्रह्मवायू तन्नामानौ महद्गतौ ।
विद्यादिभिस्त्रिभिस्तासु गायत्र्यादिषु तिसृषु ।। ८.१२७ ।।

क्रमाद्ब्रह्मा च वायुश्च शेषश्चासन्हरीच्छया ।
विपशेषौ सभार्या च महद्राजे रजोत्रिधार् ।। ८.१२८ ।।

हर्याज्ञयैवत्रिविधाहंरेष्वभिमानिनः ।
विद्याद्युत्थैर्ब्रह्मपूर्वैस्त्रिभिः रुद्रस्त्रिरूपकः ।। ८.१२९ ।।

सभार्यस्त्रिविधाहङ्कृन्मानीतुस्थूलदेहकः ।
महत्तत्वस्य गर्भस्थमहदावरणं मतं ।। ८.१३० ।।

लक्ष्मीनारायणो ब्रह्मवायू भार्यासमन्वितौ ।
उक्तेषु वक्ष्यमाणेषु सर्वतत्वेषु सर्वदा ।। ८.१३१ ।।

वसन्ति तान्विना शेषवीशाद्या नक्षमा क्वचित् ।
वैकारिकाद्धि कुर्वाणान्मनस्तत्वं जगद्गुरुः ।। ८.१३२ ।।

सृष्ट्वाहङ्कारगर्भस्थं चकार पुरुषर्षभः ।
तैजसात्तु विकुर्वाणात्हरिणा चेन्द्रियाणि च ।। ८.१३३ ।।

ज्ञानशक्तीनि पञ्चापि कर्मशक्तीनि पञ्च च ।
सृष्टा भावीनि काले तु सृज्यं वै भूतपञ्चकं ।। ८.१३४ ।।

यत्र यत्र स्थाप्यमीशस्तत्रतानि क्रमाद्व्यधात् ।
आकाशं तु विकुर्वाणात्स्पर्शमात्रमभूद्धरेः ।। ८.१३५ ।।

ततो वायुं समुत्पाद्य वाय्वावरणमातनोत् ।
वायोश्चैव विकुर्वाणाद्रूपमात्रं ह्यभूत्ततः ।। ८.१३६ ।।

ततो वह्निं समुत्पाद्य वह्न्यावरणमातनोत् ।
वह्नेरपि विकुर्वाणाज्जलमात्रं व्यधाद्धरिः ।। ८.१३७ ।।

ततः सलिलमुत्पाद्य जलावरणमाचरत् ।
जलावृत्ते विकुर्वाणात्तु गन्धमात्राभवद्विभोः ।। ८.१३८ ।।

ततः पृथ्वीं सनिर्माय चक्रे भूम्यावृतिं हरिः ।। ८.१३९ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे अष्टमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ९



श्रीभगवानुवाच

भूम्यावरणमध्ये तु ब्रह्माण्डोत्पादनोचितं ।
योजनानां पञ्चविंशत्कोटिद्विगुणसंमितं ।। ९.१ ।।

देशमुर्वरितं चक्रे भगवान्देशकालवित् ।
असंसृष्टानि तत्वानि ब्रह्माण्डोर्ध्वगतानि च ।। ९.२ ।।

अण्डं तदन्तर्निखिलं संसृष्टं परिकीर्तितं ।
विज्ञाननामको विष्णुः अहङ्कारस्य रक्षकः ।। ९.३ ।।

मनो हृषीकामात्रासु तत्तन्नामा रमापतिः ।
आकाशवायुतेजस्तु प्राणनामाखिलेश्वरः ।। ९.४ ।।

अन्ननामा पृथिव्यां सः जलावरणगोपि च ।
विशेषपृथिवी चाण्डद्विगुणावृत्तिरूपिका ।। ९.५ ।।

अबग्नीरनभोहङ्कृन्महत्तत्व गुणा इमे ।
सत्वाद्यावृत्तयोण्डोर्ध्वं स्थिताः क्ष्मावरणाः क्रमाथ् ।। ९.६ ।।

दशोत्तराः प्रविज्ञेया तमसो द्विगुणं रजः ।
रजसो द्विगुणं सत्वं ततो न प्राकृतं क्वचिथ् ।। ९.७ ।।

पश्चादूर्ध्वप्रदेशे तु अनिरुद्धात्मको हरिः ।
तस्माद्धशाधिकतनुः सोप्यावरणरूपकः ।। ९.८ ।।

ततो दशाधिकौ प्रद्युम्नसङ्कर्षणनामकौ ।

वासुदेवस्तदूर्ध्वस्थस्तद्धशांशाधिको मतः ।। ९.९ ।।

ततोप्यनन्तगुणिकानन्तानन्त प्रदेशके ।
लक्ष्मीनारायणौ व्याप्तौ मर्यादा न तयोः क्वचिथ् ।। ९.१० ।।

श्रीर्देशकालतोनन्तागुणानन्ता न हि क्वचित् ।
अनिरुद्धात्प्रथमतो ऋजुभिस्त्वपरोक्षिभिः ।। ९.११ ।।

सह पूर्वोक्तकालेन जातौ द्वौ भार्यययायुतौ ।
त्रिरूपकौ ब्रह्मवायू त्रिगुणावृत्तिगौ क्रमथ् ।। ९.१२ ।।

तेषां सत्वाद्या वृत्तयः स्थूलदेहाः प्रकीर्तिताः ।
ततोनिरूद्धसूक्ष्मदेहाज्जातौ विधीरणौ ।। ९.१३ ।।

स ऋजूकौ चतुर्वारं महत्तत्वगतौ मतौ ।
तेषां महत्तत्वमेव स्थूलदेहं वदन्ति हि ।। ९.१४ ।।

तत स्त्रिरूपौ स ऋजू तौ द्वौ शान्तीशजौ क्रमात् ।
त्रिविधाहङ्कृतिगतौ स भार्यौ स ऋजू उभौ ।। ९.१५ ।।

एकविंशद्वारजातौ मनस्तत्वादितत्वगौ ।
अपरोक्षिणां ऋजूनां च शतस्याण्डाद्बहिर्जनिः ।। ९.१६ ।।

एवं रुद्रादि तत्वेशाः स्वसंख्या नियमोचिताः ।
अण्डाद्बहिः सृष्टियोग्याः दृष्टेशाः नेतरे क्वचिथ् ।। ९.१७ ।।

एवं त्रिरूपतो जाताः प्राक्शान्तीशेन कालतः ।
सूक्ष्मेण ऋजुजन्मानन्तरं शेषादयस्त्रयः ।। ९.१८ ।।

षण्णीलाद्याः कालयोगात्सापर्ण्याद्याः क्रमेण तु ।
अजेशाजेरशेष्यैस्तु अजेराभ्यां स्त्रिभिः स्त्रिभिः ।। ९.१९ ।।

रूपैरहङ्कारतत्वात्मकस्थूलशरीरिणः ।
बभूवुरितरेषां तु पदयोग्यापरोक्षिणः ।। ९.२० ।।

ते तथैव महत्तत्वाद्येकविंशति तत्वके ।
तावद्रूपैःसूक्ष्मतत्वाजातौ प्रागनिरूद्धतः ।। ९.२१ ।।

मन आदीनि तत्वानि स्थूलदेहानि भेजिरे ।
इन्द्रादि पुष्करान्ताश्च सूक्ष्मतत्वानिरुद्धजाः ।। ९.२२ ।।

एकविंशद्वारतस्ते आसन्चित्तादि तत्वगाः (आस श्रितादित तत्वगाः) ।
तानि स्थूलादि तत्वानि(देहानि) तेषां आसन्क्रमेण हि ।। ९.२३ ।।

प्राक्शान्तीशोत्थितेन्द्राद्याः मनस्थूलशरीरिणः ।
द्वित्र्यब्दिपञ्चषड्वारं जाताः श्रोत्रादितत्वगाः ।। ९.२४ ।।

सप्ताषटनवदिग्रुद्रवारजाताः क्रमेण तु ।
इन्द्रादयः पुष्करान्ताः वागादि स्थूलदेहकाः ।। ९.२५ ।।

ततश्च पञ्चवारोत्थाः प्राक्शान्तीशेन कालयोगतः ।
शब्दादि स्थूलदेहेताः ततो जातास्तु द्वादिगाः ।। ९.२६ ।।

अत्रोक्तानां सुराणान्तु यादृशस्थूलदेहतः ।
भावीनां च पदस्थानां तद्वशे स्थितिरिष्यते ।। ९.२७ ।।

अनिरुद्धः सूक्ष्मकर्ता प्रागेषामुचितस्थलं ।
प्राप्यैव सृष्टिमकरोद्धेशकालार्थतत्वविथ् ।। ९.२८ ।।

सर्वतत्वस्थितानान्तु ऋजूनां सूक्ष्मदेहगाः ।
सत्वाणवो दशगुणाधिका यान्ति च सर्वशः ।। ९.२९ ।।

रजस्तमोणवः पादमात्रतो यान्ति चोन्नतिं ।
बहुवारजातरुद्रेन्द्रादि सूक्ष्मशरीरगाः ।। ९.३० ।।

सत्वाणवःसमाश्चोपाश्चोपचितास्तथा ।
रजस्तमोणवो रुद्रशक्रादिसुरसूक्ष्मगाः ।। ९.३१ ।।

द्वित्र्यब्धिपञ्चषट्सप्ताष्ट धर्मशिवार्ककैः ।
भागतोविंशदन्तैर्वृद्धिं यास्यन्ति वै क्रमाथ् ।। ९.३२ ।।

तेनैव तत्कारणेन पूर्वपूर्वोक्त कारणैः ।
उत्तरोत्तररूपेषु बुद्धिमान्द्यादि चेष्यते ।। ९.३३ ।।

महदादिषु चाण्डोर्ध्वं दैत्यावेशादि नेष्यते ।
यथा सूक्ष्मशरीरेषु अभिवृद्धं रजस्तमः ।। ९.३४ ।।

भवत्तेषां तथा प्रोक्तं स्थूलदेहेष्वपि स्फुटं ।
रजस्तमोणवो व्यक्तिं यास्यन्त्येव ततः क्रमाथ् ।। ९.३५ ।।

तत्वानि पूर्वरूपाणि सन्त्यनन्तानि तानि तु ।
ऋजवः सर्वतत्वेषु प्रतिभातपरावराः ।। ९.३६ ।।

सभार्या नीचोच्चसर्वतत्वेषु संस्थिताः ।
रजस्तमोणूपचयाधिक्याद्बुद्धिविपर्ययं ।। ९.३७ ।।

नैव यास्यन्ति ते सर्वे हरेः प्रियतमाःसदा ।
ब्रह्मासरस्वतीविष्णोः सर्वाङ्गैः सम्भवन्ति हि ।। ९.३८ ।।

वामनाड्युत्थितौ शेषविपौ विष्णोः शिवस्तथा ।
नीलाद्यावारुणी पूर्वाः इन्द्रकामौ मनोभवौ ।। ९.३९ ।।

सभार्यौ च गुरुर्बुद्धेः मनुराद्योह्युपस्थतः ।
दक्षोङ्गुष्टात्कामपुत्रः मनवः कामपूर्वकाः ।। ९.४० ।।

मरुतः श्वासतः सूर्यः चक्षुषः चन्द्रमा श्रुतेः ।
धर्मो हृदः सभार्यश्च वरुणो रसनोत्थितः ।। ९.४१ ।।

भृगुस्त्वचोग्निर्मुखतः जातान्मेढ्रान्मनुर्गतेः ।
विश्वामित्रमरीच्याद्याः मित्रोपानाच्चनैरुतः ।। ९.४२ ।।

स्कन्दाद्भवगणपतिः शम्भुजयन्तौ नाभिपादयोः ।
नासत्यौ नासिकाभ्यन्तु विश्वक्सेनो मुखादभूथ् ।। ९.४३ ।।

पद्भ्यान्तु ऋभवः(रुतवः)(रुभवः) कण्ठाद्धिग्देवास्तु कर्मजाः ।
रुद्राः कपोलाल्ललाटाच्च वसवत्स्विच्छया विभोः ।। ९.४४ ।।

आदित्यास्तु प्रकाशोत्था दन्तपङ्क्तिस्थिता अपि ।
सनकाद्या मनोजाता जयाद्यानाभि पार्श्वतः ।। ९.४५ ।।

गङ्गादि नद्यो नाडिभ्यः पादाङ्गुष्टादिभिः प्रभोः ।

अनुक्ततात्विकाःसर्वे कटाक्षोत्था बुधामताः ।। ९.४६ ।।

शनिः शरीरतः पुष्कराद्या कर्मेन्द्रियोद्भवाः ।
अनुक्तदेवताभार्याः भर्तृभिः सहसम्भवाः ।। ९.४७ ।।

एते ह्यशेषतत्वेषु तत्वस्थित हरीरयोः ।
प्रोक्त्यैरङ्गैः क्रमाज्जातः वसन्ति ह्यभिमानिनः ।। ९.४८ ।।

सृष्टावेवं बहिश्चाण्डान्मुक्तावेवं हरेर्वशः ।
जातौ जातौ हि यस्तस्मात्कामस्तुद्गतिःसुतः ।। ९.४९ ।।

चण्डो जयाद्या द्वारस्थाः शशाङ्को धनपस्तथा ।
गन्धर्वपतयःसर्वे जातिष्वपि च तात्विकाः ।। ९.५० ।।

पुष्करोच्चा बुधोच्चास्तु अनुक्तास्ते प्रकीर्तिताः ।
एवं शेषस्य भागोत्था(मार्गोत्थ) बहिरण्डात्समस्तशः ।। ९.५१ ।।

नवकोट्यो हि देवानां सत्वतत्वाभिमानिनः ।
अजो विपस्ततो नीलाद्विषट्कविपवल्लभा ।। ९.५२ ।।

तत इन्द्रःशशी तस्मात्प्राणाद्या मारुतोखिलाः ।
इन्द्राद्दक्षस्ततो देवर्षयो वै नारदादयः ।। ९.५३ ।।

इन्द्राद्गुरुस्ततो सूर्यः जयौ विघ्नप्रभुस्ततः ।
अभवंश्च स्मृतासूर्यादग्निरग्नेस्तु रुद्रकाः ।। ९.५४ ।।

आदित्यावसवो विश्वाप्याश्वनौ रक्षसाधिपः ।
पर्जन्य बुधशन्याद्याः पुष्करान्ताः समुत्थिताः ।। ९.५५ ।।

वसन्ति सर्वतत्वेषु गरुत्मान्मार्गदेवताः ।
उत्तमानां च गुरवः नीचा उत्तमसेवकाः ।। ९.५६ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे नवमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १०



---

श्रीहंस उवाच

सर्वत्र भाविःऋजवो विष्णोर्वायोर्भवन्ति हि ।
अण्डान्तर्बहिस्था वा नानैर्जन्म लभन्ति ते ।। १०.१ ।।

व्यामोहायासुराणान्तु अन्यजा इव भान्ति ते ।
ब्रह्मापरोक्षिणःसर्वे रुद्राद्याः भावितात्विकाः ।। १०.२ ।।

अहङ्कारेश्वरैर्वायुजातैर्जता भवन्ति हि ।
उत्तमैःसर्वनीचानां सृष्टिरङ्गेर्धदेशतः ।। १०.३ ।।

एवं क्रमात्सृष्टिरुक्ता व्युत्क्रमेण लयः स्मृतः ।
अण्डोर्ध्वदेशतत्वेशा अत्र पूर्वोक्तरीतितः ।। १०.४ ।।

सुप्रारब्धा बहुविधा दोषसम्बन्धवर्जिताः ।
ये ये यथा यथा जाताः सृष्टिकाले भवन्ति हि ।। १०.५ ।।

गुणसृष्ट्युत्तरं जाताः सर्वेस्थूलशरीरिणः ।
अंशानन्दबलज्ञानदेशकालापरोक्षकाः ।। १०.६ ।।

लयसृष्टिपदावेश गुणलक्षणकान्तयः ।
एवं चतुर्दशमहातारतम्याः प्रकीर्तिताः ।। १०.७ ।।

वेदेषु देशकालेषु लिङ्गदेहेषु चाक्षरे ।
प्रकृतौ सर्वजीवानां महत्तत्वगुणत्रये ।। १०.८ ।।

अंशा ऋजूनां सन्त्येव विपाद्यंशा न तेषु हि ।

अहङ्कारे विपाद्यंशा न तत्रेन्द्रादिकांशकाः ।। १०.९ ।।

नीचनीचामरमनो देहादिषु सुरोत्तमाः ।
वसन्त्यंशैर्ननीचास्तु स्वोत्तमेषु विशन्ति हि ।। १०.१० ।।

अण्डादन्तर्बहिस्त्वेवमंशोत्था तारतम्यधीः ।
विधेः सर्वाङ्गसायुज्यं वाण्याः वाचिमनस्यपि ।। १०.११ ।।

स्वोत्पत्यङ्गेषु देवानां सायुज्यं दिशतीश्वरः ।
उत्तमानां महानन्दा नीचनीचेषु सङ्गताः ।। १०.१२ ।।

शतांशादवरा नीचानन्दादुत्तमगामि तत् ।
शतांशादुत्तमा मुक्तौ श्वेतद्वीपादिषु स्फुटं ।। १०.१३ ।।

त्रिषु स्थानेषु श्रीभागे चिन्मात्रानन्दमूर्जितं ।
भूदुर्गाभागयोः प्राप्तव्यानन्द(दं शुद्ध) सात्विकैः ।। १०.१४ ।।

देहैर्भोगोचितानन्त शुद्धसात्विकवस्तुभिः ।
भूदुर्गाभ्यां कल्पितैस्तैर्भगवान्भक्तसन्ततेः ।। १०.१५ ।।

उत्तमानां स बहुलं नीचानामल्पमेव च ।
तत्तद्योग्य निजानन्दं ददाति पुरुषः स्वराठ् ।। १०.१६ ।।

मुक्तौ स्वोत्तम भोग्योरु मुदपेक्षाल्पिकस्य तु ।
न विद्यते हि स्वानन्दपूर्णस्य न पुनर्जनिः ।। १०.१७ ।।

दुःखाज्ञानानादिकं भूयो भग्नलिङ्गस्य नेष्यते ।
शतशब्दो दशसहस्रपरं प्राप्तं वदन्ति हि ।। १०.१८ ।।

उत्तमानां बलं भूरिनीचानामल्पमेव तु ।
गर्भोदकागतः शेषः मूर्ध्नैकेनाखिलं भुवं ।। १०.१९ ।।

स द्वीपाब्धिसरिच्छैलां धत्ते सर्षपवत्सदा ।
तं वै शेषं सहस्रास्यं वायुकूर्मो महाबलः ।। १०.२० ।।

धत्ते पुच्छाग्रतः शक्रपूर्वाः शेषाद्बलावराः ।
बहवो गोमहिष्याद्या एक कुञ्जर भोजने ।। १०.२१ ।।

यावत्तावत्कूर्महस्तितोप्येते हि कोटिशः ।
मिलिता अपि नागेन योद्धुमर्हति न क्वचितु ।। १०.२२ ।।

तथोत्तमसुरैर्नीचसुराः कोटिसहस्रशः ।
मिलिताः प्रथनेनेशाः किमुमर्त्यास्तु राक्षसाः ।। १०.२३ ।।

अतो बलेन सर्वेषां तारतम्यं विवेचितं ।
अनालोच्यानन्तकल्पेष्वण्डान्तर्बहिरास्थितं ।। १०.२४ ।।

अतीतं वर्तमानं चानागतं वस्तु सञ्चयं ।
सदा करतलामलकवद्वेत्ति विष्ण्वनुग्रहाथ् ।। १०.२५ ।।

अनादि नित्यानधिकान्निर्विशेषादनन्तरान् ।
सोपि नारायणगुणानालोच्याप्यतिकालतः ।। १०.२६ ।।

अनन्तकल्याणगुणपूर्णस्यानन्तभागतः ।
विभक्तानन्तभागैकभाग ज्ञप्तौ न हि क्षमः ।। १०.२७ ।।

विनेश्वरगुणज्ञानेज्ञानं ऋजुगणस्य हि ।
अतीतानागतजगद्विषयीकरणे क्षमं ।। १०.२८ ।।

आलोच्य वैष्णवज्ञानेप्यधिकं सर्वजीवतः ।
विपशेषादिकज्ञानं सर्वदालोचनादपि ।। १०.२९ ।।

स्वोत्तमैर्भिन्नजगतः विषयीकरणे क्षमं ।
न भवेदेकदेशेन जानन्त्येते न चान्यथा ।। १०.३० ।।

जडञ्चाचेतनं वापि शिवाद्याः पुष्करान्तिमाः ।
लिङ्गबद्धाः पदस्थाश्च भाविनश्चापरोक्षिणः ।। १०.३१ ।।

अण्डान्तरे बहिश्चापि तात्विका बहुरूपतः ।
स्थिता अपि न जानन्ति साकल्येन जगद्गतं ।। १०.३२ ।।

अनादिसर्वजीवानां ज्ञानं तद्विविधं मतं ।
स्वारूपिकं च बाह्यञ्च नित्यं स्वारूपिकं मतं ।। १०.३३ ।।

अजन्यं शाश्वतं विष्णोः बन्धस्य वशगं सदा ।
जीवङ्केशाधीनमायावशगं क्रमयोगतः ।। १०.३४ ।।

साधनेन व्यञ्ज्यमानमामुक्त्यन्तं ततः परं ।
एकप्रकारमज्ञानं रहितं स्वोत्तमाश्रिताथ् ।। १०.३५ ।।

ज्ञानाच्छतगुणन्यूनरं इश्वरे वा जगत्यलं ।
अनन्तवेदोक्तगुणान्विष्णेर्जानाति पद्मभूः ।। १०.३६ ।।

पदस्थो वा विमुक्तो वा तदन्ये तद्गुणस्थिताः ।
क्रमेणैव शतंन्यूनज्ञानं विष्णोरुपासकाः ।। १०.३७ ।।

प्राकृतोप्राकृतशरीराश्रितस्य ऋजोःसदा ।
मनस्यनित्यं यज्जन्यं पुनः पुनरपि स्फुटं ।। १०.३८ ।।

तद्बाह्येवृत्तिरुपं च यथार्थं सर्वदापि च ।
तेषां पञ्चविधज्ञानं क्वचिदेव न सर्वदा ।। १०.३९ ।।

दैत्यावेशादि शून्यास्ते सदा दुर्विषयोज्झिताः ।
साक्षीन्द्रियैः सहाप्येतल्लिङ्गसूक्ष्मेन्द्रियावृतैः ।। १०.४० ।।

स्थूलेन्द्रियैः सुविषयासक्तैः प्रात्यक्षकी मतिः ।
यदार्थैव तया दोषशून्या सद्युक्तिजा मतिः ।। १०.४१ ।।

युक्तिजन्यं तु यज्ञानमानुमानिकमीरितः ।
प्रत्यक्षमनुमानञ्च आगमस्तस्य साधनं ।। १०.४२ ।।

यथार्थैव तथा वेदशास्त्रार्थश्रवणादपि ।
मनोजातं स्वागमजं यथार्थज्ञानमेव हि ।। १०.४३ ।।

देशादवरदेशेतु क्रमात्तत्वेषु संश्रिताः ।
तत्वव्यापारकाले तु स्वरूपोचितशक्तयः ।। १०.४४ ।।

यथागमसमुद्भूतं त्रिविधं परिकीर्तितं ।
ज्ञानं मनःसमुद्भूतं बाह्यकार्यमितीरितं ।। १०.४५ ।।

यत्प्रत्यक्षानुमानं च आगमस्तस्य साधनं ।

जीवः प्रमाताविषया अर्थास्ते कारणामताः ।। १०.४६ ।।

रूद्रादीनान्तु यज्ज्ञानं बाह्यं मनसि सम्भवं ।
प्रत्यक्षाद्यैस्त्रिभिः सद्भिः साधनैरप्यनित्यकं ।। १०.४७ ।।

क्वचिद्यथार्थं तज्ज्ञानमयथार्थं क्वचिद्भवेत् ।
कर्मदेवाजानजाद्याः देवदासाः क्रमावराः ।। १०.४८ ।।

देवगन्धर्वपर्यन्ताः सांशाः सर्वे प्रकीर्तिताः ।
निरंशास्ते सदामर्त्यगन्धर्वाद्या स्तृणान्तिमाः ।। १०.४९ ।।

जीवा एषां स्वरूपन्तु ज्ञनं नित्यं यथार्थकं ।
उत्तमोत्तमतो न्यूनं अयथार्थादिकं क्रमाथ् ।। १०.५० ।।

बाह्यं जन्यमनित्यं च यथार्थं प्रायशः सदा ।
रिश्वरे वा जगति वा क्रमादल्पावगाहि च ।। १०.५१ ।।

इति ज्ञाने तारतम्यं देवेषूच्चावचेष्वलं ।
महद्गणत्रयेष्वंशाः ऋजूनां सन्ति चोन्नते ।। १०.५२ ।।

देशे तत्र न रुद्रादि देवांशास्तदधस्तने ।
देशेहङ्कृतिरुद्रादि देवांशाःसन्ति सर्वदा ।। १०.५३ ।।

तत्रेन्द्राद्या न तिष्ठन्ति ततोप्यवरदेशगाः ।
भूताव्यतीनां मर्यादा यद्देशे यादृशीरिता ।। १०.५४ ।।

कलाषोडशतद्वाश्च तत्तदा वृत्तिसन्तताः ।
मनः शब्दः श्रोत्रवाचां कलास्त्वाकाशसन्तताः ।। १०.५५ ।।

त्वक्स्पर्शपाणिसंज्ञास्तु कलावायुसमाश्रिताः ।
नेत्ररूपाङ्घ्रिसंज्ञास्तु कलास्तेजः शरीरगाः ।। १०.५६ ।।

रसनारसगुह्यानां कलावारिसमाश्रिताः ।
गन्धघ्राणोपस्थकला पृथिव्यावरणाश्रिता ।। १०.५७ ।।

मनोमात्रेन्द्रियकला भूतेषु क्रमयोगतः ।
तदाधिकारा हरिणा शक्राद्याः पुष्करान्तिमाः ।। १०.५८ ।।

सूक्ष्मस्थूलोत्पत्तिकाले उत्तमास्तूर्ध्वदेशगाः ।
नीचनीचास्तूच्चदेशस्थितोच्चोच्चसुराश्रयाथ् ।। १०.५९ ।।

देशादवरदेशे तु क्रमात्तत्वेषु संस्थिताः ।
तत्वव्यापारकाले तु स्वरूपोचितशक्तयः ।। १०.६० ।।

इति देशोचित महातारतम्यं वदन्ति हि ।
देवमानेनाब्दशतं पौर्वापर्यव्यवस्थया ।। १०.६१ ।।

ऋजूनां च जनिः प्रोक्ता सहस्राब्दान्तरामताः ।
विपाद्यास्तु तथेन्द्राद्या दशसाहस्रवत्सरैः ।। १०.६२ ।।

क्रमात्पौर्वापर्यजाताः कालान्नीचोच्चभाविनः ।
अथ सर्वस्यापरोक्षतारतम्यं विविच्यते ।। १०.६३ ।।

तृणादिसर्वजीवानां स्वरूपोद्धार आगते ।
काले तत्तद्योग्यजीवसाधनोचितकालके ।। १०.६४ ।।

हरिश्च श्रीब्रह्मवायू सभार्यौ च तदाज्ञया ।
एतदन्यद्वीपवर्षजायामानान्हि सर्वशः ।। १०.६५ ।।

स्वकर्मवशगान्स्वर्गान्तरिक्षधरान्चरन् ।
नानायोनिगतान्जीवानतलाद्याधरस्थितान् ।। १०.६६ ।।

उद्धर्तुकामो भगवान्भारते जनयिष्यति ।
तत्र मानुषयोन्युत्थांस्तत्रापि ब्राह्मणोत्तमान् ।। १०.६७ ।।

तत्र सर्वस्वरूपोरुव्यक्तिकारककर्मणा ।
संयोज्य सर्वसद्योग्यज्ञानदानगुरूत्तमान् ।। १०.६८ ।।

भिन्नदेशे भिन्नकाले योजयत्यखिलं हरिः ।
तृणादिमर्त्यपर्यन्तगन्धर्वास्ते ह्यनन्तशः ।। १०.६९ ।।

निरंशास्ते प्रतीकालम्बनास्ते कर्मयोगिनः ।
देवगन्धर्वपूर्वास्त्वाजानजान्ता समस्तशः ।। १०.७० ।।

अप्रतीकालम्बना सांशाः क्रमोच्च ज्ञानयोगिनः ।
प्रतीकस्थं शरीरस्थं पश्यन्तीति तथाह्वयाः ।। १०.७१ ।।

प्रतीकाद्बहिरीशस्य दर्शानात्कर्मदेवताः ।
अप्रतीकालम्बनाश्च प्रायोविज्ञानयोगिनः ।। १०.७२ ।।

एषामण्डान्तरे जन्मापरोक्षादि प्रशस्यते ।
निरंशाः पक्वकाले तु उत्क्राम्यैव महरादिगाः ।। १०.७३ ।।

एषां लये स्वोत्तमेषु प्रवेशो नैव विद्यते ।
देवगन्धर्वपूर्वाणां भूमावुत्क्रमणाल्लयः ।। १०.७४ ।।

महालये स्वोत्तमेषु प्रवेशः लूक्ष्मदेहतः ।
उत्क्रमानुत्क्रमान्योगिनोह्यतत्वेश्वरवशान्जगुः ।। १०.७५ ।।

पुष्करान्ता तात्विकाश्च क्वापि नोत्क्रमणाल्लयाः ।
यान्ति स्थूलशरीरैस्ते स्वोत्तमेषु विशन्ति हि ।। १०.७६ ।।

ताननुक्रमणान्याहुः योगिनो भक्तियोगिनः ।
सत्कर्मज्ञानभक्ती च सर्वेषां सर्वदापि हि ।। १०.७७ ।।

अवश्यकास्ते सर्वेपि तत्तत्प्राचुर्यतस्तथा ।
निरंशाःसत्साधनायोचितजन्मसहस्रतः ।। १०.७८ ।।

ज्ञानन्तु दशभिः प्राप्य सद्भक्तिं त्रिभिराप्य च ।
दृष्ट्वा हृदिस्थं मुच्यन्ते ह्यतस्ते कर्मयोगिनः ।। १०.७९ ।।

सत्कर्मकृत्वा निष्काम्यं लभन्ति गुरुसन्तती ।
अतात्विका देवदासाः सत्कर्मशतजन्मभिः ।। १०.८० ।।

कृत्वा दशसहस्रोरुजन्मभिर्ज्ञानमाप्य च ।
भक्तिं त्रिशतकैराप्य मुच्यन्ते ज्ञानयोगिनः ।। १०.८१ ।।

अतस्ते कर्मदेवतास्तदूर्ध्वं भक्तियोगिनः ।
तृणाद्याः स्वहृदिस्थं तं पश्यन्त्युचितजन्मभिः ।। १०.८२ ।।

दीपकान्तिविशिष्टेशं न देवान्नैव मर्त्यगं ।

घटिकार्धं शरीरे वा मुक्तौ शक्तिस्तु तादृशी ।। १०.८३ ।।

चिन्मात्रोपासनाशक्तिः नैवाधिकगुणोत्तरे ।
तेषारं इदृश एवं स्यातपररोक्षो हि नाधिकः ।। १०.८४ ।।

रामकृष्णादि रूपाणि बहिः पश्यन्त्यपि क्वचित् ।
मानुषत्वेन पश्यन्ति अपरोक्षेन संस्मृतः ।। १०.८५ ।।

स्थूलहृद्वापरोक्षास्तु बाह्यस्तादपरोक्षकाः ।
स्वस्वरूपस्थजीवाभस्वतन्त्रस्य च दर्शनं ।। १०.८६ ।।

स्वरूपाभ्यापरोक्षस्तु सर्वेषामेवमेव हि ।
पादोनघटिकामात्रं स्वरूपे प्राकृते हृदि ।। १०.८७ ।।

पश्यन्ति क्रिमिकीटाद्याः प्रदीपप्रभया हरिं ।
स्वरूपचक्षुषादृष्टिः अपरोक्ष इतीर्यते ।। १०.८८ ।।

वेद देशाक्षरोकालो जीवेशौ प्राकृतेन्द्रियैः ।
न वेद्या हि स्वरूपेण वेद्या एव प्रकीर्तिताः ।। १०.८९ ।।

भक्त्या हरिप्रसादेन नष्टेत्वज्ञानपञ्चके ।
रत्नवद्भासुरे लिङ्गे सूक्ष्मदेहेस्थितस्य तु ।। १०.९० ।।

जीवस्य चक्षुषी व्यक्तो भवतः स्वेन पश्यति ।
तेजोमयस्वरूपस्थं स्थूलहृद्वं क्रमेण तु ।। १०.९१ ।।

यवमात्रं हरिन्तार्णाः कीटाद्याः बदरीमितं ।
अङ्गुष्टाग्रमितं वृषाः प्रदीपदशसन्निभं ।। १०.९२ ।।

हरिं पश्यन्ति घटिकामितं कालं रमापतिं ।
समं दीपं चिदानन्दं चिदानन्दात्मकं मृगाः ।। १०.९३ ।।

खगाश्च पशवो गावः हृद्वं जीवगतं हरिं ।
प्रदीपशतभायुक्तं घटिकार्धतदर्धकं ।। १०.९४ ।।

सच्चिदान्द आत्मेति मानुष्यैर्ध्येयरिश्वरः ।
विद्युद्वन्मानुषा विद्युर्दशविद्युन्मितं नृपाः ।। १०.९५ ।।

राजानस्तद्विगुणाभं सूर्यमण्डलवत्सुराः ।
गन्धर्वाः पितरःसूर्यशतसन्निभमीश्वरं ।। १०.९६ ।।

गोप्यः कृष्णाङ्गसङ्गार्हाः पञ्चसाहस्रसूर्यभं ।
आजानजादशसाहसस्रार्काभं त्वग्निजा अपि ।। १०.९७ ।।

चतुर्लक्षाधिकाशीतिलक्षजीवगणेष्वपि ।
दशैव पुरुषाः प्रोक्तास्तात्विकास्तेषु पञ्च च ।। १०.९८ ।।

पर्जन्यादवराः पञ्च पुष्करादुत्तमा मताः ।
सस्त्रीकाःसोमहीना अण्डादन्तर्बहिस्थिताः ।। १०.९९ ।।

त्रिंशच्चारणरक्षांसि सप्ततिः सर्वजातिषु ।
अन्तरालेतु पद्मोत्था ब्रह्मायावद्धितिष्ठति ।। १०.१०० ।।

तावत्संवत्सरगत प्रतिप्रतिदिनेष्वपि ।
सांशा अतात्विकाः सर्वेसंख्यया वक्ष्यमाणया ।। १०.१०१ ।।

मितास्तु प्रतिकल्पेपि पदस्था ह्यपरोक्षिणः ।
उर्वश्याद्याह्यप्सरसः शतंशा स्व(स्वष्ट)संख्यया ।। १०.१०२ ।।

मिता अजानजैस्तुल्याः कर्मदेवसमापराः ।
शतं पितॄणां सप्तैव तेषूर्वश्यादिभिः समाः ।। १०.१०३ ।।

अन्ये आजानजेभ्यस्तु न्यूनास्तेभ्योवराः क्रमात् ।
गन्धर्वास्तु शतं तेषु अष्टौ तुल्याश्च कर्मजैः ।। १०.१०४ ।।

शतकोटिमिताः सर्वे ॠषयो विंशदुत्तमाः ।
तेष्वेव तावत्विष्टाभिः शतकं कर्मजैः समं ।। १०.१०५ ।।

तदन्ये आजानजेभ्यस्तुल्या अग्निसुता अपि ।
द्व्यष्टौसहस्राणि शतन्त्रिंशच्चारणरक्षसां ।। १०.१०६ ।।

साध्यसिद्धास्तथान्यास्तु सप्ततिः सर्वजातिषु ।
शतं सिद्धाजानजाख्या पश्यन्ति हृदि जीवगं ।। १०.१०७ ।।

कोटिसूर्यप्रभं कर्मदेवा हृद्गं बहिस्थितं ।
द्विसप्तलोकसमितं ते प्रतीकावलम्बनाः ।। १०.१०८ ।।

मर्त्याः द्विघटिकामात्रं त्रिनाड्यन्तं नृपोत्तमाः ।
तथा मानुषगन्धर्वाश्चतुर्नाड्यन्तमीश्वरं ।। १०.१०९ ।।

षण्णाड्यन्तं सुगन्धर्वा गोप्यायामान्तमञ्जसा ।
शतोनशतकोट्यस्तु ऋषयोग्निसुता अपि ।। १०.११० ।।

साजानजादशघटिकामितं कालं जगद्गुरुं ।
पश्यन्ति कर्मदेवास्तु मध्याह्नान्तं परेश्वरं ।। १०.१११ ।।

स्वोत्तमस्पर्धयाहीनाः दुष्प्रारब्धविवर्जिताः ।
भावरूपाज्ञानशून्याः दैत्यावेशविवर्जिताः ।। १०.११२ ।।

पूर्वोक्तकान्त्याकाले तं पश्यन्ति जगदीश्वरं ।
पूर्वोक्तदोषरहितास्तात्विकाःसर्वदा हरिं ।। १०.११३ ।।

पश्यन्तिदिवपर्यन्ता दोषा एते हि नीचकैः ।
उत्तमेषूत्तमेष्वल्पास्तथा चान्यतरामताः ।। १०.११४ ।।

ब्रह्मणो दोष सम्बन्धो न क्वापि क्व चद्दृश्यते ।
राजानो मर्त्यगन्धर्वपूर्वा षट्दशपूर्वकान् ।। १०.११५ ।।

शतं दशसहस्रांश्च लक्षकोटिमितान्गुणान् ।
विष्णोर्गुणानर्बुदांश्च सर्वानपि ततोधिकान् ।। १०.११६ ।।

अनन्तवेदोक्तगुणान्ब्रह्मोपास्यति नेतरः ।
मर्त्योच्चा हृदि देवांश्च पदस्था पीठदेवताः ।। १०.११७ ।।

तथावरणगान्देवान्पश्यन्त्यपि च मण्डलं ।
सुषुम्नां सप्तकमलान्यपि तद्गहरीश्वरे ।। १०.११८ ।।

स्थानेशं चैव मूलेशं राजानो मर्त्यगायकाः ।
इडापिङ्गलनाडिस्थान्क्रमोच्चान्सर्वदेहगान् ।। १०.११९ ।।

तत्वेशां स्तद्गतहरेः रूपाणि अ(नि)खिलान्यपि ।

ध्यात्वोपास्य विमुच्यन्ते देवा आजानजाह्वयाः ।। १०.१२० ।।

इमे ते च प्रतीकस्थ हरिपादावलम्बिनः ।
कर्मदेवा अतत्वेशा अपि रूपाणि सर्वशः ।। १०.१२१ ।।

उपास्यापि विराड्रूपं मुच्यन्ते समुपास्य च ।
अप्रतीकालम्बनास्ते तु कर्मदेवाः सुरा अपि ।। १०.१२२ ।।

त्यक्तलिङ्गस्य मुक्तस्य तृणकीटादिकस्य च ।
स्वरूपदेह ते सर्वे दशयोजनसन्तता ।। १०.१२३ ।।

वृक्षादीनां मृगादीनां ततो द्विगुणरुग्भवेत् ।
विमुक्तानान्तु मर्त्यानां शूद्रादीनामतः परं ।। १०.१२४ ।।

एकद्वित्रिचतुष्पादाधिकरुक्सन्तताः सदा ।
राजन्यामर्त्यगन्धर्वास्ततोद्वित्र्याधिकप्रभाः ।। १०.१२५ ।।

परितो मेरुतुल्यात्विट्देवगन्धर्वसन्ततेः ।
चिरान्तो पितरो मुक्ता भुवर्लोकान्तकान्तयः ।। १०.१२६ ।।

गोप्यः कृष्णाङ्घ्रिसङ्गार्हाः उपसन्तति दीप्तयः ।
आजनाजातत्समाश्च स्वर्गान्ता तत्प्रकाशिनः ।। १०.१२७ ।।

यस्य यस्य च जीवस्य प्रकाशो यत्र चेरितः ।
दैवाद्बहिर्दृष्टिगतो भाति मर्त्योच्चवद्धरिः ।। १०.१२८ ।।

न सच्चिदानन्दतनुर्बाह्यदृग्गोचरो भवेत् ।
दृष्ट्वोपास्य विमुच्यन्ते कर्मदेवा विराट्तनुं ।। १०.१२९ ।।

तादृज्जोतिस्तावदन्तं विष्णुं पश्यति चक्षुषा ।
स्वारूपिकेण बाध्येन नैव पश्यन्ति चेश्वरं ।। १०.१३० ।।

पश्यन्ति नैवोपास्यन्ति ब्रह्माण्डे व्याप्तमीश्वरं ।
पुष्कराद्यास्तु शक्रान्ताः पूर्वोक्ताखिलरूपिणं ।। १०.१३१ ।।

अण्डाद्बहिः पृथिव्यादि मनस्तत्वादि सन्ततेः ।
दृष्ट्वाध्यात्वोपास्य सर्वे मुक्तिं यास्यन्ति कालतः ।। १०.१३२ ।।

अहङ्कारगतं द्रष्टुमीशानोपासने क्षमाः ।
पुष्कराद्या महेन्द्रान्ताः क्रमादधिककान्तयः ।। १०.१३३ ।।

कोट्यर्बुदार्काभं देवं वामदेवादयो हरिं ।
उपास्याहङ्कारतत्वव्याप्तसत्तनुमीश्वरं ।। १०.१३४ ।।

मुच्यते च महत्तत्वे तमस्यपि ततं हरिं ।
पश्यन्तीवारुणीपूर्वा नेष्यन्ति तमसिस्थितं ।। १०.१३५ ।।

अनन्तार्करुचा सत्वावृत्यन्तं व्याप्तमव्ययं ।
उपास्य गीर्मुक्तिमेति ततोप्यधिकरुक्ततः ।। १०.१३६ ।।

वासुदेवावरणगं ब्रह्मा पश्यति नेतरः ।
यावत्पश्यन्ति तं जीवं तावत्सामान्यरुक्स हि ।। १०.१३७ ।।

यावनुपास्यो वै विष्णुस्तावत्तेषां विशेषभा ।
ब्रह्मणो नैव सामान्यरुग्विशेषप्रभो हि सः ।। १०.१३८ ।।

अत्यल्पसुखरूपांशा जीवानां योग्यतावसन् ।
यादृशी भारमायास्तु व्याप्तायाः सर्वदेशगा ।। १०.१३९ ।।

भानुप्रभागता दीपप्रभा यद्वन्न रोचते ।
तथा विष्णुप्रभानुन्नामाप्रभा नैव रोचते ।। १०.१४० ।।

एवं नीचप्रभास्वोच्चप्रभासु प्रविलीयते ।
तथापि च यथार्थज्ञा मुक्ताप्तै तत्ववेत्तमाः ।। १०.१४१ ।।

यो यावतीं हरौ कान्तिं वेत्यसौ तच्छतांशभाक् ।
प्रभात्येव प्रकाशस्य तारतम्यं विदुत्तमाः ।। १०.१४२ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे दशमोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः ११





---

श्रीहंस उवाच

पुरुषेषु ब्रह्मवायू विपादिषु रमापतिः ।
पुं रूपेण विशेषावेशादिकं सर्वदा हरिः ।। ११.१ ।।

करोति स्त्रीषु मा वागीर्वायुस्त्री(षु)स्वरूपतः ।
विशेषावेशकृद्विष्णुः योग्यतायानुयोगतः ।। ११.२ ।।

आविष्टस्तूत्तमेष्वेकः विशेषात्मा तु तैः सुरैः(स्वकैः) ।
जीवैरसाध्य सुमहत्कर्मकार यतीश्वरः ।। ११.३ ।।

उत्तमोत्तमजीवेषु आवे(दे)शो यादृगिष्यते ।
न तथा नीचजीवेषु तस्मात्तेह्यल्पशक्तयः ।। ११.४ ।।

पदस्थेषु सुरेष्वेवमावेशो नैव मुक्तिगः ।
न निरंशेषु चावेशाः सांशेष्वाजानजेष्वपि ।। ११.५ ।।

वायोः सर्वावतारेषु विशेषावेश एव हि ।
स्वरूपलिङ्गसूक्ष्मेषु स्थूलदेहेषु सर्वदा ।। ११.६ ।।

रक्षार्थं सर्वतत्वेषु सर्वदा वसतीश्वरः ।
आवेशो(थ) न तथा विष्णोर्विशेषाख्यः सुरेष्वपि ।। ११.७ ।।

क्वचिद्व्यक्तिं क्वचिद्रासं सप्तावेशोण्डजेष्वपि ।
अण्डादूर्ध्वं सदादे(से)वेष्वन्तः ऋजुषु चेष्यते ।। ११.८ ।।

नीचेषूत्तमदेवानां आवेशः क्वचिदिष्यते ।
बलार्थमसुरेष्वेव(ष्वीरः) आवेशं कुर्वति प्रभुः ।। ११.९ ।।

आदादाज्ञा तेन दृप्ता सुरैर्नष्टा हरीच्छया ।
भवन्ति नित्यदा विष्णुः सुरेष्वन्तर्हितो हि सः ।। ११.१० ।।

ज्ञानानन्दबलाद्याये गुणाः साधारणा मताः ।
तृणादि ब्रह्मपर्यन्तेष्वपि माया हरावपि ।। ११.११ ।।

तथापि नीचनीचेषु गुणादीपौपमाश्रिताः ।
साधरणाः सजातीयाः विजातीया विलक्षणाः ।। ११.१२ ।।

स्वन्तन्त्रत्वं स्वरमणत्वं सुगुणव्याप्तिता तथा ।
परापेक्षादि शून्यत्वं(राहित्यं) नियन्तृत्वं जगद्गुरौ ।। ११.१३ ।।

सृष्ट्यादि कर्तृताद्यास्तु विजातीया हरौ मताः ।
अक्ष(र)त्वादयो मायां नैव ते ब्रह्मणि स्फुटं ।। ११.१४ ।।

ऋजुत्वं प्राकृतोच्चत्वं नित्यार्थेष्वभिमानिता ।
सर्वाधिपत्यता लिङ्गदेहे कार्यवशीत्वता ।। ११.१५ ।।

निष्काम्ययोग्यतापूर्वाः विजातीया इतिस्मृताः ।
एते हरीरयोः प्रोक्ताः नैव ते विपशेषयोः ।। ११.१६ ।।

एवमेषूत्तमेषूक्ताः विजातीया न नीचगाः ।
सत्यनन्तत्वतस्त्वेषामुक्तिर्नैव हि शक्यते ।। ११.१७ ।।

कर्मदेवान्समारभ्य ब्रह्मा तेषु शरीरिषु ।
चक्रशङ्खादयोरेखाः शरशक्त्यङ्कुशादयः ।। ११.१८ ।।

प्रासतोमरतिर्यङ्कहलभाग्योमृतादयः ।
गोविन्द्यातिलगोधूमछत्रचामरतोरणाः ।। ११.१९ ।।

ध्वजोर्ध्वव्यजनाकारा आन्दोलागतवानिनः ।
मच्छकच्छपसिंहाद्याः वृषरत्नधरादयः ।। ११.२० ।।

गरुत्मच्छेषमुखरा रेखा दक्षके पदे ।
पुंसान्तु दक्षिणेपादे स्त्रीणां वामे वसन्ति हि ।। ११.२१ ।।

धेनुशङ्खगदारेखाः वामे पुंसां शुभा मताः ।
नीचेष्वङ्गन्यूनरूपाः उत्तमेषूच्चरूपकाः ।। ११.२२ ।।

सम्पूर्णाः सर्वदारेखाः प्राणे मायां हरावपि ।
तत्राप्युच्चक्रमोच्चास्ति रेखाः चोच्चत्वहेतवः ।। ११.२३ ।।

षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।
सप्तपाद चतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः ।। ११.२४ ।।

शरीराङ्गेषु साधूनां पञ्चस्थानेषु दीर्घतां ।
हृस्वत्वं पञ्चसु तथा सप्तस्थानेषु रक्तिमा ।। ११.२५ ।।

षडौन्नत्यं यस्य सम्यक्पृथुता त्रिषु यस्य तु ।
गम्भीरता च लघुता त्रिषु स्थानेषु भाति वै ।। ११.२६ ।।

स सुलक्षणसम्पन्नः स तु ज्ञानप्रदो गुरूः ।
मर्त्योत्तमेषु वै विंशल्लक्षणानि भवन्ति हि ।। ११.२७ ।।

क्रमेणैकैकशो वृद्धान्यपि सलक्षणानि च ।
सर्वाणि परिपूर्णानि लक्षणानि विधीरयोः ।। ११.२८ ।।

शरीरे च स्वरूपे च सर्वसत्साधनेष्वलं ।
अति(भि)व्यक्तानि (चो)वोच्चेषु अव्यक्तानीतरेषु च ।। ११.२९ ।।

अथ सृष्टौ तारतम्यं शृणुष्व प्रागथोत्तरे ।
आत्मसूक्ष्मगुणस्थूलसृष्टयः प्रागुदीरिताः ।। ११.३० ।।

पञ्चमात्राव्यक्तभूता वृत्तिपञ्चकतः क्रमात् ।
प्रागुक्त भावरूपाज्ञानपञ्चकमभूत्ततः ।। ११.३१ ।।

भ्रान्तिर्भौतिकदेहानां व्यक्तायोनिष्वपि क्वचित् ।
अण्डादूर्ध्वमियं सृष्टि रसं सृष्टेति कीर्त्यते ।। ११.३२ ।।

महदाद्यण्डपर्यन्तः सर्ग इत्यभिधीयते ।
संसृष्टमण्डं तद्वञ्च समस्तं सम्प्रकीर्तितं ।। ११.३३ ।।

अनुसर्गं जनाः प्राहुः अण्डान्तर्यदजोत्थितं ।

महदाद्याः सुराः सर्वेप्यण्डसृष्टावशक्तयः ।। ११.३४ ।।

अस्तुवन्पुरुषं सार्धं सप्तत्रिंशच्छरन्मयं ।
कालं ततो हरिः सर्वतत्वजातं तदन्तकैः ।। ११.३५ ।।

भाग्यैरादाय संयोज्यैरेकीभूतं करोत्यजः ।
तच्च त्रेधा विभज्येशः तेष्वाद्यं भागमीश्वरः ।। ११.३६ ।।

गृहीत्वा विष्णुनामेशस्तन्निगीर्य श्रियं स्वयं ।
वीर्यं तदात्मकं तस्यामाधत्त पुरुषेश्वरः ।। ११.३७ ।।

पृथिव्यावृत्तिमध्ये तु सुषुवेण्डं विधेस्तनुं ।
पञ्चाशत्कोटिविस्तारमण्डंसृष्ट्वा जगद्गुरुः ।। ११.३८ ।।

सर्वचिच्चैत्यसहितो वीराणामण्डमाविशत् ।
ब्रह्माण्डे जलसम्पूर्णे सर्वलोकाश्रयो भवेथ् ।। ११.३९ ।।

स विष्णुः पद्मनाभाख्यो भूदण्डसलिले शुभे ।
प्राकृतेः स्वस्वरूपेणात्यभिन्नो हीश्वरो हरिः ।। ११.४० ।।

सर्वाभरणसम्पन्नः सहस्राङ्घ्र्यक्षिबाहुकः ।
प्राक्(प्रत्यक्)शिरास्तूर्ध्वमुखः शिश्ये पीताम्बरः समः ।। ११.४१ ।।

अण्डसृष्ट्यादिमेकाले तत्वजातात्त्रिधा कृतात् ।
अद्यादण्डमभूदन्यं पद्मनाभोग्रसद्विभुः ।। ११.४२ ।।

तत्सृष्टं भूप्रदानं नाभौ स्थाप्य हिरण्मयं ।
पद्मं व्यजनयत्तस्य कन्दात्भूमिरथोभवथ् ।। ११.४३ ।।

सप्तद्वीपसमुद्रादि तमोघनजलान्विता ।
पञ्चाशत्कोटिविस्तीर्णाप्यण्डमध्यप्रदेशगा ।। ११.४४ ।।

लक्षयोजनसंख्याकपृथुलातिधृढाश्रया ।
पञ्चविंशत्कोटिमितलक्षोनं गर्भवार्यधः ।। ११.४५ ।।

योजनानां तदुपरि स्थापिताभूरभूद्धरेः ।
भूनामा भूमिगो विष्णुगर्भवार्येस्तदाह्वयः ।। ११.४६ ।।

वक्ष्यमाणेषु चोक्तेषु जडचित्सु तदाह्वयः ।
आधारो रक्षकः सर्वनामा सर्वभृदीश्वरः ।। ११.४७ ।।

मेरुस्तन्मध्यगो भूमेश्चतुरस्रो हिरण्मयः ।
योजनानां लक्षमितः उच्छ्रायाद्रत्नसानुकः ।। ११.४८ ।।

अथ षोडशसाहस्रयोजनायामरिरितः ।
तावता भूरिमानःसहमेकःसर्वसुरालयः ।। ११.४९ ।।

ऊर्ध्वं तद्द्विगुणायामः सहस्राशीतियोजनैः ।
चतुर्भिरधिकैर्भूमेरुच्छ्रितः सर्वतः शुभं ।। ११.५० ।।

मेरोः पूर्वाद्यष्टदिक्षु लोकपाल सदांस्यलं ।
सन्त्येवसर्वभद्राणि सार्धताद्विसहस्रकैः ।। ११.५१ ।।

चतुरस्राणि तन्मध्ये तच्चतुर्गुणविस्तरं ।
ब्रह्मणस्तु सदस्यानि रत्नहेममयानि च ।। ११.५२ ।।

तेष्विन्द्रोग्निर्यमः क्रव्यात्वरुणानि लयक्षपः ।
शिवश्चेति सभार्यास्ते साङ्गाः सपरिवारकाः ।। ११.५३ ।।

तन्मदध्ये मण्टपस्तस्य विधेराज्ञाकरास्तथा ।
तत्र वाणीश्वरोनन्त भुजगस्य सुशिरस्ककः ।। ११.५४ ।।

लोकपालसदो मध्ये विन्ध्योदिक्षु चतुस्नुषु ।
समनाः सर्वतोभद्रा तारसार्धाष्टसहस्रकाः ।। ११.५५ ।।

मन्दारपारिजाताद्याः दिव्यपुष्पफलश्चदाः ।
सरित्सरोवराण्यत्र कञ्जादिसुमवन्त्यपि ।। ११.५६ ।।

नानानारीसेवितानि हंसादि द्विजवन्त्यपि ।
आजानजसमानैकजातीयपरिचारकैः ।। ११.५७ ।।

सेवितोद्रिवरोभास्वद्दीप्य दिव्यद्रिगोचरः ।
दिव्याभरणवस्त्राद्यैः अलङ्कृतसुराद(ल)यः ।। ११.५८ ।।

तस्य पूर्वाद्यष्टदिक्षु मन्दरो मेरुमन्दरः ।
सुपार्श्वः कुमुदश्चेति अवषटम्भनगाः क्रमाथ् ।। ११.५९ ।।

ते सहस्रस्त्रिका यामाः सहस्रदशकोच्छ्रिताः ।
चूतजम्बूकदम्बाश्चन्यग्रोधस्तेषु भूरुहाः ।। ११.६० ।।

एकादशशतोच्चास्ते गजोपमफलान्विताः ।
सुवर्णरत्नसंकाशाः शतशाखा समावृताः ।। ११.६१ ।।

तत्र नाना पक्षिगणाः सगन्धकुसुमछदाः ।
तेषां तूपरितः स्वर्णरत्नमन्दारभूमिषु ।। ११.६२ ।।

नन्दनं चैत्ररथकं वैभ्राजकमितीरितं ।
वनान्यवर्णनीयानि सर्वतोभद्रसंज्ञकं ।। ११.६३ ।।

तेषु वै कामिकाः सिद्धाः चरन्ति ललनान्विताः ।
तेषु सञ्चरतां सौख्यं अधिकं न श्रमादयः ।। ११.६४ ।।

एषां फलैर्निपतितैः विशीर्णैः शुभ्रसद्रसैः ।
निर्यद्रसमुद्भूताश्चतस्रश्च चतसृषु ।। ११.६५ ।।

द्विलक्षवृत्त दीर्घस्थाः जरा दुर्गन्ध दुःसहाः ।
नीलः श्वेतः शृङ्गवांश्च मेरोरुत्तरतो नगाः ।। ११.६६ ।।

योजनानां नवसहस्रायामाक्ष्मातलस्य च ।
मर्यादागिरयःसर्वे प्रत्यक्सागरदीर्घकाः ।। ११.६७ ।।

उश्च्रयाद्धशसाहस्राः पृथुला द्विसहस्रकाः ।
निषधो हेमकूटश्च हिमवानिति दक्षिणे ।। ११.६८ ।।

पूर्वमानेनोक्तभुवः मर्यादा गिरयोमताः ।
विस्तारादुच्छ्रयाद्धैर्घ्यान्नीलादीनां समाः क्रमाथ् ।। ११.६९ ।।

नानासिद्धगणैः सेव्याः सर्वरत्न समाकुलाः ।
पूर्वस्यां दिशि मेरोस्तु गन्धमादनपर्वतः ।। ११.७० ।।

प्रतीच्यां दिशि मेरोस्तु माल्यवान्नाम भूधरः ।

आनीलनिषधायामौ पर्वतौ देवपूजितौ ।। ११.७१ ।।

तौ पूर्वसमितौ दिवौ सर्वसद्वृक्षशोभितौ ।
चतुर्दिक्ष्वपि मेरोस्तु नवसाहस्रयोजनैः ।। ११.७२ ।।

विस्तृतं भूतलं चेलावृतवर्षं वदन्ति हि ।
रम्यको हिरण्मयश्चैव कुरुवर्षादयस्त्रयः ।। ११.७३ ।।

वर्षानीलाद्यद्रिभिस्ते विभक्ता स्वर्णभूमयः ।
गन्धमादनतः पूर्वभूमौ भद्राश्ववर्षके ।। ११.७४ ।।

माल्यवत्पश्चिमेकेतुमाल्यवर्षः प्रकीर्तितः ।
हरिकिंपुरुष भारतवर्षास्तु क्रमयोगतः ।। ११.७५ ।।

दक्षिणे निषधाद्यद्रिविभक्तभूमयः क्रमात् ।
वैवस्वतो मनुर्मर्त्योपासको रम्यकेश्वरः ।। ११.७६ ।।

अर्यमाः पितृपः कूर्मोपासकस्तु हिरण्मये ।
भूमिरादिवराहस्य भार्या वै कुरुवर्षगा ।। ११.७७ ।।

हयास्योपासको भद्रश्रवाः भद्राश्व वर्षके ।
रत्याकामेनार्चितौ द्वौ कृतिप्रद्युम्नसंज्ञकौ ।। ११.७८ ।।

केतुमाल्ये स्त्रीजनार्च्यो न जीवं भद्रके खलु ।
प्रह्लादोपासितो नारसिंह्योपि हरिवर्षगः ।। ११.७९ ।।

हनुमत्पूजितो रामः नाथः किंपुरुषस्य तु ।
भद्राश्वाद्दक्षिणे वर्षे भारताख्यो गुणाधिकः ।। ११.८० ।।

नराभिमानि शेषांश भारतस्यास्य चानुजः ।
नारायणो दक्षपुत्र्याः(त्र्यां) मूर्त्याधर्मसमुत्थितौ ।। ११.८१ ।।

तौ नारदस्य च ऋषेः ज्ञानदौ लोकपूजितः ।
इलावृत्ते मेरुपूर्वदिशि सव्यापसव्यगौ ।। ११.८२ ।।

जठरो देवकूटश्च मेरुपृष्ठे च पूर्वतः ।
गन्धमादन संस्पृष्टौ स्वर्णरत्नमयौ समौ ।। ११.८३ ।।

विस्तारात्तूच्छ्रयाच्च योजना द्विसहस्रकौ ।
नवसाहस्रसद्भूमिमध्ये जठरनीलयोः ।। ११.८४ ।।

भूर्देवकूटनिषधमध्यस्थात्तावती मता ।
षट्सहस्रान्तरभुवौ गन्धमादनमन्दरौ ।। ११.८५ ।।

तिर्यक्तद्विगुणा भूमिः मेरुपूर्वस्थगोत्रयोः ।
कैलासकरवीरौ द्वावेवं मेरोस्तु दक्षिणे ।। ११.८६ ।।

पवनः परियात्रश्च द्वौ मेरोः पश्चिमाश्रयौ ।
शृङ्गश्च मकरश्चैव मेरोरुत्तरतस्तथा ।। ११.८७ ।।

निषधान्तौ दक्षिणवुत्तरौ नीलसंमितौ ।
पाश्चात्यौ माल्यवत्सृष्टौ पूर्वगाद्रीवमानतः ।। ११.८८ ।।

एतैरखिलावृतोवर्षो विभक्तश्चाष्वधामलः ।
सुकुमारं वनं रम्यं सर्वत्र्यैण्यैव तेष्वलं ।। ११.८९ ।।

तेषु चेवास्त्रियः पृष्टापूर्वाध्यष्टं दिगुन्मुखाः ।
अषटरूपैरादिशेषः सहस्रवदनः प्रभुः ।। ११.९० ।।

वसत्यस्य महारुद्रः सांबश्चाष्टतनुः स्वयं ।
सदोपास्त इति शेषं तद्वं सङ्कर्षणं परं ।। ११.९१ ।।

पनरष्टतनुः शम्भुः भवान्याभस्मगो भवः ।
तेष्वष्टभवनेष्वेव सदारमति शङ्करः ।। ११.९२ ।।

प्रारब्धकर्मणा सापि पतिं रमयति स्फुटं ।। ११.९३ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे एकादशोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १२



---

श्रीभगवानुवाच

त्रिविक्रमनखोद्भिन्नाजाण्डखर्पररन्ध्रतः ।
अन्तः प्रविषटबाह्याम्बु वैकुण्ठशिखरात्ततः(दधः) ।। १२.१ ।।
पतत्कमण्डुले धाता दधारेश पदाम्बुजे ।
प्रक्षाल्यतच्छेषजलाद्गङागानामनदी व्यधाथ् ।। १२.२ ।।

अरनाम्नीण्यनाम्नी सा भूदुर्गाभागयोर्द्वयोः ।
पृथक्सप्तावर्णगा परिघा रूपिणी मता ।। १२.३ ।।

नन्दिनी सत्यलोके सा नलिनी च तपोमये ।
जनोलोके मालिनीति महर्लोके तु भोगिनी ।। १२.४ ।।

स्वर्धुनी सा स्वर्गलोके वियद्गङ्गा ध्रुवालये ।
मदापगा सान्तरिक्षे मेरोर्ब्रह्मसदोर्ध्वतः ।। १२.५ ।।

निपतन्ती च पूर्वादि चतुर्दिक्षु क्रमेण सा ।
सीताचा(?अ)लकालकनन्दा च चक्षुर्भद्राह्वया शुभा ।। १२.६ ।।

सीताख्यातिरवोद्वेगात्सर्वत्रेलावृताद्बहिः ।
निपात्यमाना हरिणा पूर्वमब्धिङ्गमिष्यति ।। १२.७ ।।

सैवदक्षिणभागस्था कालेन महता किल ।
सगरात्मजशुद्ध्यर्थं भगीरथसमर्चिता ।। १२.८ ।।

भागीरथीति गदिता सर्वलोकैकपाविनी ।
जह्नुना राजःऋषिणा पीतात्यक्ता च वाक्यतः ।। १२.९ ।।

सा जाह्नवी मेरुनगस्योत्तराधःस्थलस्थितात् ।
मार्गादतलपूर्वेषु सप्तलोकेषु संस्थिता ।। १२.१० ।।

सैव त्रिपथगा देवी भाति नारायणाश्रया ।
सैषा रम्यक(?त)पूर्वेषु हरिवर्षादिषु त्रिषु ।। १२.११ ।।

भद्राश्वकेतुमाले तु चरन्ती सागरप्रिया ।
भारतेस्मिन्महावर्षे नद्यः सन्ति सहस्रशः ।। १२.१२ ।।

श्रीरङ्गो वेङ्कटेशाख्यो तोताद्रिः पुष्कराह्वयः ।
श्रीमष्णनैमिषारण्ये गण्डकी बदरीस्थलं ।। १२.१३ ।।

अष्टावेते स्वयंव्यक्ताः भारते सर्वसिद्धिदाः ।
स्वामिपुष्करणीपूर्वाः पुष्करिण्यः सहस्रशः ।। १२.१४ ।।

मनवः पितरः सिद्धाः सर्वसाधनतत्पराः ।
सुरासुरा भारतेस्मिन्स्वसाधनपरायणाः ।। १२.१५ ।।

अत्र सत्कर्मणा स्वर्गं निरयं पापकर्मणा ।
मिथ्या ज्ञानेन च तमो ज्ञानेनैव पदं हरेः ।। १२.१६ ।।

प्राप्नोति पुरुषो ह्यत्र पदस्थास्तत्वदेवताः ।
केचित्सर्वावतारेषु भूमौ भूत्वा भवन्त्यलं ।। १२.१७ ।।

सर्वेसुराः पदस्थाश्च रामकृष्णावतारयोः ।
जाता भूमावुपास्येशं पुनर्मूलस्वरूपकैः ।। १२.१८ ।।

एकी भवन्त्यपि सुराः भाविनः प्रायशोत्र तु ।
स्वसाधनैकनिरताः देवदासादयोपि च ।। १२.१९ ।।

सांशाः निरंशाश्च तथा स्वस्वसाधनतत्पराः ।
विधयश्च निषेधाद्याः अत्रत्यानां भवन्ति हि ।। १२.२० ।।

लक्षयोजनविस्तीर्णलवणाम्बुधिवेष्टितः ।
द्वीपोयं जम्ब्वाख्यो हि मेरुस्तस्यैव मध्यमः ।। १२.२१ ।।

सुमेरोपरितश्चेलावृतं तद्गवनं शुभं ।
सुकुमाराभिधं रुद्रशापात्तत्रगतः पुमान् ।। १२.२२ ।।

नारीभवति पार्वत्यारन्तुकामस्तथाकरोत् ।
एतस्माद्विगुणः प्लक्षस्त्विक्षूदाम्बुधिवेष्ठितः ।। १२.२३ ।।

स्थूलाश्च पर्वताः सन्ति तत्र श्रीहरिसंमिताः ।
तास्ते क्षीराब्धिमारभ्य इक्षुसागरसंस्पृशाः ।। १२.२४ ।।

भारताद्यष्टवर्षेषु षड्द्वीपा अपरा अपि ।
मध्यस्तत्काम्यपुण्यानां भोगार्थं हरिनिर्मिताः ।। १२.२५ ।।

पापादत्र जनीनैव पुण्यादेव हि काम्यतः ।
न तत्र चायुर्नयमो यावत्पुण्यन्तु जीवनं ।। १२.२६ ।।

नरानार्यः सुन्दराङ्गाः सन्ति भोगोचितार्थदाः ।
वृक्षाश्च पुण्यरत्नानि गृहाश्च स्वर्णभूमयः ।। १२.२७ ।।

विनैव कालमरणं तत्र दुःखादिकं न हि ।
इच्छामात्रेण सर्वाथसिद्धिस्तत्रेशनिर्मितः ।। १२.२८ ।।

सूर्यात्मकं हरिं तत्र पूजयन्ति विचक्षणाः ।
ततो हि द्विगुणोद्वीपः शाल्मलः सर्ववर्तुलः ।। १२.२९ ।।

योजनानां चतुर्लक्षं मध्वब्धि समवेष्टितः ।
जाम्बवं पुष्करं त्यक्त्वा मध्यद्वीपेषु पञ्चसु ।। १२.३० ।।

सर्वेषु सप्तनद्यः स्युः पर्वताः सप्तकीर्तिताः ।
सप्तद्वीपगता नद्यः दद्बाह्याम्बुधिगामिनः ।। १२.३१ ।।

भोगोपयुक्ता निखिलाः पदार्थजनसङ्कुलाः ।
तत्रत्याः पर्वताः पूर्वोत्तरसागरसंस्पृशः ।। १२.३२ ।।

तैर्विभक्ताःसप्तवर्षास्तत्तन्मनुसुत्राश्रयाः ।
चन्द्रान्तर्यामिणं विष्णुं शाल्मलस्था भजन्ति हि ।। १२.३३ ।।

क्रौञ्चद्वीपस्तद्विगुणोद्ध्यष्टलक्षार्णवे न तु ।

पव्यम्बुना वेष्टितोलं सूर्यकान्तादि सन्मणिः ।। १२.३४ ।।

वरुणान्तर्गतं विष्णुं भजन्ति हि ततोत्र हि ।
ततो हि द्विगुणाः शाकद्वीपः क्षीराब्धिवेष्ठितः ।। १२.३५ ।।

द्वात्रिंशल्लक्षविस्तारः समीरोपासकोदितः ।
शाकद्वीपस्य मध्येतु अनन्तरूपी हरिस्वयं ।। १२.३६ ।।

अर्धलक्षस्थलतनुः सप्तलक्षोन्नतः प्रभुः ।
मेरुलोकालोकनगाभिमुखानन्तलसन्मुखः ।। १२.३७ ।।

चक्रप्राकाररूपात्मा तद्वीपे परितः सदा ।
लक्षोन्नतस्थेषु जगच्चक्षुःसूर्यश्चरत्यसौ ।। १२.३८ ।।

मेरुं प्रदक्षिणी कुर्वन्नृक्षचक्रोनुवेगतः ।
दिनेदिनेत्वेकवारं सहस्रांशुः प्रकाशकृथ् ।। १२.३९ ।।

सूर्यस्याक्षोत्तराग्रन्तु तैलयन्त्रमिवोलितः ।
लुप्तमन्यच्चक्रयुतं मानसोत्तरपर्वते ।। १२.४० ।।

परिभ्रमन्ति तन्मध्येऽनसि भूमेः समोन्नते ।
चत्वारिंशद्योजनोर्ध्वप्रदेशस्प्रशिमध्यतः ।। १२.४१ ।।

तावत्परिमितान्यक्षसम्बन्धो तावदन्तराः ।
स्तम्भाः षष्ठिसहस्राश्च चत्वारः सन्ति सदृढाः ।। १२.४२ ।।

शतयोजनका स्थूला दीप्यध्वज्रमयाः शुभाः ।
तदूर्ध्वमण्टपे पादलक्षोच्चमणि दीपिते ।। १२.४३ ।।

योजनायुत देदीप्यमण्डले भानुराजतिः(रूर्जितः) ।
अहःकरः सर्व सत्साधनकृत्फलदोर्यमा ।। १२.४४ ।।

मेरोः पूर्वस्थितो भारतस्थानामुदयङ्करः ।
मेरोर्दक्षिणगोमध्य(ध्यं)दिनकृत्सप्तसन्धयः ।। १२.४५ ।।

मेरोः पश्चिमगो भारततस्थानामस्तमानकृत् ।
मेरोरुत्तरगश्चार्धरात्रिकृद्भारते नृणां ।। १२.४६ ।।

एवमेव चतुर्दिक्षुविद्यमानजनस्य तु ।
प्रातर्मध्यन्दिननिशीथार्धरात्रप्रवर्तकः ।। १२.४७ ।।

नारायण विशेषावेशैधितात्मगतिः स्वयं ।
एकमेव पृथङ्नामभेदेन श्रीहरीच्छया ।। १२.४८ ।।

सप्तद्वीपेषु योभानुवरिपोहस्तबाधिपः ।
सव्येन भ्रमतां भानां त्रिलक्षोन्नतवर्तिनां ।। १२.४९ ।।

तिर्यगूर्ध्वं च षट्पञ्चाशल्लक्षाधिककोटितः ।
दीर्घाभिश्च शलाकाभिः निर्मिते रूक्षचक्रके ।। १२.५० ।।

शतयोजनविस्तीर्णं शलाकाग्रेषु भान्त्यलं ।
वसन्ति तन्मार्गगताः सञ्चरन्ति नवग्रहाः ।। १२.५१ ।।

ते शलाका वज्रमयाः अष्टोत्तरशतात्मकैः ।
छिद्रैश्च कलितापाशैः ध्रवाधीनैश्च वारुणैः ।। १२.५२ ।।

सम्बन्धाग्राभिरंशेन क्ळप्यैकैकेनभाश्रयाः ।
चतुश्चिद्रयुताः सर्वशलाकास्तेषु वारुणाः ।। १२.५३ ।।

पाशाश्चान्तः प्रविष्टाश्च भूमेर्लक्षोन्नतान्तरे ।
स्थितस्य सूर्यरथाग्रेताः अक्षकोट्यस्तथाग्रतः ।। १२.५४ ।।

धुराग्राक्षाग्रयोर्बद्धपाशाग्रेणसमन्विताः ।
पाशाध्रुवस्य नक्षत्रपादैरेवापसव्यतः ।। १२.५५ ।।

संवत्सरेणैकवारं भ्रमन्तं भ्रामयत्यलं ।
ध्रुवस्तस्य हयाःसप्तहरिद्वर्णा महाजवाः ।। १२.५६ ।।

अनुक्तस्तात्विकैस्तुल्यास्तद्यन्ता गरुडाग्रजः ।
सोऽनूरुरुस्त्वरुणःसर्पपाशैस्तान्योजयत्यलं ।। १२.५७ ।।

मानसोत्तरमेरोः तु संस्प्रष्टाक्ष सुमध्यगे ।
अनेहर्म्यकलितवज्रसम्भाव्यग्रमण्टपे ।। १२.५८ ।।

चरतो भास्करस्यास्यत्वाधारः शाकमध्यगः ।
हरिर्मेरोःसार्धसप्तोत्तरसप्ततिलक्षकः ।। १२.५९ ।।

तावत्तदुत्तरगत मानसोत्तरपर्वते ।
योजनानां षष्ठिसहस्रोन्नतं चक्रमूर्जितं ।। १२.६० ।।

मध्यछिद्रान्वितं वज्रमयं भ्रमति विष्णुना ।
द्वादशारं हि षण्णेमि त्रिनाड्यन्तर्बहिस्थले ।। १२.६१ ।।

युगकूबराक्षत्रयस्य रेखासु तिथिवारपाः ।
अपरेषु मासास्तिष्ठन्ति ऋतवस्तस्य नेमिगाः ।। १२.६२ ।।

चतुर्मास्यास्त्रिनेमिस्थाः द्विपरिश्चेदगेयने ।
वत्सरः सर्वचक्रस्थस्त्वेकचक्रोरथस्य तु ।। १२.६३ ।।

स कर्कटादिषु चरनेकोह्ना(ह्नां)क्षयकृद्रविः ।
षट्सुरात्रदीर्घ्यमानः कारयन्दक्षिणायनं ।। १२.६४ ।।

करोति नक्रादिषु षट्सुचरन्रात्रिक्षय(यं)करः ।
अह्नान्यभ्येधयन्नेकश्चोत्तरायणकारकः ।। १२.६५ ।।

विनाडिकानां पञ्चाशन्मासिमास्येधेयेत्यसौ ।
अहान्युत्तराणेन्यत्र रात्रिकालर्धिकृत्तथा ।। १२.६६ ।।

यदा तु मेषतुलयोः चरत्येष समानिशा ।
द्यस्राश्च वृश्चिकाद्येषु पञ्चस्वपि निशार्धिकृथ् ।। १२.६७ ।।

वृषादि पञ्चसु चरन्दिवाकालसमर्धिकृत् ।
त्रिलक्षोन्नतनक्षत्रशलाकाग्राष्टविंशके ।। १२.६८ ।।

उदग्दक्षिणकोणाद्याः कृत्तिकाद्याः समाश्रिताः ।
तिर्यगूर्ध्वं सप्तसप्तशलकाभिर्विनिर्मितं ।। १२.६९ ।।

द्वाभ्यां द्वाभ्यां कोणयोस्तु रेखाभ्यामुपकल्पितं ।
नक्षत्रमण्डलं भूमेरूर्ध्वं लक्षत्रयेण हि ।। १२.७० ।।

एकैकस्यां शलाकायां छिद्राणि च पृथक्पृथक् ।

चत्वारि तानि दंस्रक्षाद्यादिकानि वनानि च ।। १२.७१ ।।

मेषाङ्कानि वृषाङ्कानि नृयुग्मकानि वै नव ।
कर्कसिंहाङ्गकन्यानि तुलका वृश्चिकानि वै ।। १२.७२ ।।

धनुर्नक्षत्रशङ्खानि मीनाङ्कानि च वै नव ।
तेषु तेषु प्रविष्टाश्च पादद्यष्टोत्तरं शतं ।। १२.७३ ।।

पादैर्धुवःससूर्यस्तु अपसव्यक्रमेण वै ।
सर्वनक्षत्रपादेषु क्रमाद्वृद्धौ भविष्यति ।। १२.७४ ।।

ध्रुवान्तर्हरिणा विंशद्धटिकान्तदिनत्रयं ।
एकैक नक्षत्रपादे बद्धो भवति वै क्रमाथ् ।। १२.७५ ।।

सार्धत्रयोदशादिनैरेकनक्षत्रगो रविः ।
मासेन नवपादानि भुञ्जन्द्वादश राशिषु ।। १२.७६ ।।

संवत्सरेण चरति ह्यप्रदक्षिणतो रविः ।
मेषाध्यङ्कितरन्ध्राणि मेषाद्याः राशयस्मृताः ।। १२.७७ ।।

लक्षोन्नतप्रदेशेस्थ ध्रुवपादाग्रगो रविः ।
द्विलक्षोन्नतदेशस्थ ध्रुवपादाग्रतः शशी ।। १२.७८ ।।

चन्द्रसूर्यौ ऋक्षचक्रादधौ देशगतौ मतौ ।
कुजादयश्च पञ्चापि ऋक्षचक्रोर्ध्ववर्तिनः ।। १२.७९ ।।

ध्रुवपाशैः सदाबद्धाः सञ्चरत्यपसव्यतः ।
ज्ञः पञ्चलक्षोन्नतगतः सप्तलक्षोन्नतः कुजः ।। १२.८० ।।

नवलक्षोन्नतः शुक्रः लक्षैकादशको गुरुः ।
त्रयोदशं तु सूर्यस्यमण्डलं परिकीर्तितं ।। १२.८१ ।।

लक्षपञ्चादशादूर्ध्वं शनिमण्डलमस्ति हि ।
षड्विंशति सुलक्षाणां ऊर्ध्वं सप्तर्षिमण्डलं ।। १२.८२ ।।
लक्षैकादशतस्तत्मात्ध्रुवःसंस्थो हरिप्रियः ।
स विष्णोः शिंशुमारस्य महाचक्रपदास्थिताः ।। १२.८३ ।।

ध्रुवादीन्ग्रहान्विष्णुः चक्रे सर्वान्सुवारुणैः ।
पार्शैयोर्जयति श्रीमान्शलाकारन्ध्रसङ्गताः ।। १२.८४ ।।

सर्वेह्येते भानुसमाप्रदेशेषूत्तरोत्तरं ।
चरन्ति ऋक्षपादस्थपाशैरेवतु तन्मितैः ।। १२.८५ ।।

एतेषां राशिसञ्चारैः कालं योजयतीश्वरः ।
चन्द्रोराशिद्वादशकं मासेनैकेन वर्तते ।। १२.८६ ।।

कुजो मासार्धतो राशिं भुक्त्वा राशिं समेष्यति ।
गुरुर्द्वादशभिर्मासैः त्रिंशन्मासैःशनैश्वरः ।। १२.८७ ।।

मासेनैव बुधः शुक्रः प्रतिराशिं भजत्यलं ।
सदा समगती वक्रशून्यौ द्वौ शशिभास्करौ ।। १२.८८ ।।

भानुमण्डलगश्चन्द्रो दर्शेचास्तङ्गतो भवेत् ।
एवं कुजादयः पञ्च अस्तं यास्यन्ति भानुगाः ।। १२.८९ ।।

प्राक्दिश्यस्तङ्गतौ शुक्रगुरू द्वौ पश्चिमोदयौ ।
प्रत्यगस्तङ्गतौ तौ द्वौ तु पूर्वदिश्युदितौ मतौ ।। १२.९० ।।

एवमन्येपि सूर्यस्य नास्तमानं स्वभावतः ।
मेरुछायागतं चास्तङ्गतं सूर्यं वदन्ति हि ।। १२.९१ ।।

चन्द्रार्क कव्यस्तमये लौकिके तु शुभं त्यजेत् ।
पूर्वस्यां दिशि शुक्रोस्तङ्गतो मासद्वयोत्थितः ।। १२.९२ ।।

प्रत्यगस्तङ्गतः काव्यः सप्ताहोभिरुदेत्यलं ।
गुरुर्मासेनोभयत्र ह्युदितो भवति ध्रुवं ।। १२.९३ ।।

कुजादीनां वक्रमाद्यास्तम्भ ऋज्वोति शीघ्रतः ।
गतयो विविधाःसन्ति कालस्याशुभसूचकाः ।। १२.९४ ।।

न समा हि गतिस्तेषां क्वचिदेव समागतिः ।
लक्षदीर्घयुगद्वन्द्व पुरस्थां रजयोजिताः ।। १२.९५ ।।

तद्वादशांशधुरगाः सप्ताश्वा भस्करस्य हि ।

मानसोत्तरस्यपरितो नवकोटिसुविस्तरं ।। १२.९६ ।।

सार्धं प्रदक्षिणं कर्तुं योजयन्ति महाजवाः ।
इत्थं नवग्रहैः कालचक्रं परमः पुमान् ।। १२.९७ ।।

सूर्यस्य गत्या मेषादीन्मासान्सौरेण मानतः ।
कल्पयत्यपि चन्द्रस्यगत्या चैत्रादीकान्हरिः ।। १२.९८ ।।

चान्द्रमासान्कल्पयन्ति नक्षत्रं ऋक्षसन्ततेः ।
आवृत्यं चतुरोराप्तिं चारान्मानं बृहस्पतेः ।। १२.९९ ।।

सारस्वतन्तु गान्धर्वाः पक्षाहोरात्रयो मताः ।
सारस्वतन्तु गान्धर्वमानमाहुर्विचक्षणाः ।। १२.१०० ।।

मासेन स्यादहोरात्रं मैत्रं मानं विदुर्बुधाः ।
दैवमानं वत्सराहोरात्रिकालेन तावता ।। १२.१०१ ।।

मनुर्मानं मानवाख्यं ब्राह्ममानमजस्य हि ।
मानाश्च नवमानानां विष्णुरेकः प्रवर्तकः ।। १२.१०२ ।।

द्वात्रिंशल्लक्षविस्तीर्णक्षीराब्धेर्मध्यदेशतः ।
तदर्धविस्तरोच्चक्रमप्राकाररूपकः ।। १२.१०३ ।।

दशलक्षोन्नतो भूमेः श्वेतद्वीपो रमात्मकः ।
वेदावर्णा देशकालौ नित्यव्याप्ता जडामताः ।। १२.१०४ ।।

वाय्वाकाशःसौरदीप्तिरनित्यास्तु जडामताः ।
द्रव्यान्यप्रतिघातानि तेन्योन्यस्याश्रयाणि च ।। १२.१०५ ।।

लक्ष्मीनारायणौ शुद्धचिद्रूपौ व्याप्तविग्रहौ ।
सर्वार्थप्रतिघाता च श्वेतद्वीपादयस्त्रयः ।। १२.१०६ ।।

लोकास्त्वप्रतिघाताश्च स्तम्भाध्यैर्लोकरूपकाः ।
दुर्गाभागस्तदुपरि भूभागस्तु तदूर्ध्वतः ।। १२.१०७ ।।

श्रीभागस्तु ततस्तूर्ध्वं शिखरन्तु तदूर्ध्वगः ।
भागत्रयेपि भूकन्दाः पञ्चलक्षोन्नतायुताः ।। १२.१०८ ।।

त्रिषुभागेष्वपि रमा देशहर्म्यस्वरूपिणी ।
हर्म्यं प्रदेश भूभागाः लक्षयोजनकन्दकाः ।। १२.१०९ ।।

उपर्यावर्त्तयो भागस्त्रयो भूकन्दसंमिताः ।
भागत्रयेपि च स्तम्भामणिमद्भूमितलाश्रयाः ।। १२.११० ।।

सार्धद्विलक्षसमिता नानामणिविराजिता ।
श्रीभागमध्यवेदिस्थः लक्ष्मीशोनन्तभानुरुक् ।। १२.१११ ।।

चिन्मात्रानन्तमुक्तेड्यः स्वर्गादुपरि वर्तते ।
स्थानं त्रये त्रिपाद्विष्णोः दिविस्वर्गोन्नतस्थले ।। १२.११२ ।।

श्वेतद्वीपोद्व्यष्टलक्ष दुर्गाभागस्तु तन्मितः ।
भूभागस्तु तदर्धेतः श्रीभागस्तु तदर्धतः ।। १२.११३ ।।

मणिस्वर्णोज्वलत्सत्वप्राकारान्तात्मभागकाः ।
अनेकतोरणाट्टालवेदीचत्वारशोभिताः ।। १२.११४ ।।

मणिमत्ननद्यद्रिसरोवाप्यादिसंकुलाः ।
नानायादोगणोपेतस्वर्णकञ्जाबु भास्वराः ।। १२.११५ ।।

सर्वर्तुकालपुष्पाढ्य पल्लवस्वर्णभूरुहाः ।
हंसकोकिलबर्हादि शुकस्वनसमाकुलाः ।। १२.११६ ।।

अतिसुन्दर सिंहादि नानामृगसमाकुलाः ।
अवर्णनीयरत्नेरु रचितानेकमण्टपाः ।। १२.११७ ।।

नानास्वादुस्वनोपेत नरनारीगणौर्युताः ।
सिद्धचारणगन्धर्वाप्सरो गानमणिताः ।। १२.११८ ।।

नानावाद्यमहावीणाशङ्खदुन्दुभिनिस्वनाः ।
गजाश्वरथपादातिध्वजछत्रादि लाञ्छनाः ।। १२.११९ ।।

सर्वाभरणवस्त्राढ्या विमानावलिसङ्कुलाः ।
नानाक्रीडासाधनेताः नानाः गन्धोपबृंहिताः ।। १२.१२० ।।

अनेकहंसतूले तु मणिशय्या समावृताः ।
भोगस्त्रीभिः समाकीर्णाः मणिव्यजनदर्पणाः ।। १२.१२१ ।।

मणिस्वर्णात्मकानेक भित्तिभाण्डादि साधनैः ।
अनुक्तानन्तसर्वोपस्करणैरुपशोभिताः ।। १२.१२२ ।।

चामरान्दोलिकाडोला पादपीठादि संयुताः ।
तुलसीपुष्पसद्रत्नमुक्तामालोपशोभिताः ।। १२.१२३ ।।

भानुकोटिप्रभादीप्ता पात्रनैवेद्यरूपिणी ।
घृतदध्यम्बुरूपा सा पूर्वोक्तार्थस्वरूपिणी ।। १२.१२४ ।।

दासीदाससमाकीर्णभार्यारूपाखिलेश्वरी ।
दुर्गाभूःश्रीस्वभागेषु अनन्तानन्तरूपिणी ।। १२.१२५ ।।

अनन्तरूपिणं विष्णुं सदाराधयतीश्वरं ।
स्वभावादेव नास्यार्थः प्राप्तव्यः कश्चिदेष्यते ।। १२.१२६ ।।

पूर्णकामो हरिः प्रीत्या तत्पूजां स्वीकरोत्यजः ।
स्थानत्रयेपि सा देवी ह्यनन्तोक्तार्थरूपिणी ।। १२.१२७ ।।

सर्वदेशेषु कालेषु सर्वरूपाश्रिता रमा ।। १२.१२८ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे द्वादशोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १३



---

श्रीहंस उवाच

ये प्रोक्ता देवगन्धर्वकर्मज्ञानास्त्वतात्विकाः ।
पक्वाधिकारिणो भूमेरुत्क्रान्ता महरादिषु ।। १३.१ ।।

स्थिता विपशेषोक्तमार्गेण स्वोत्तमेषु ते ।
भोगदेहप्रतिषठास्तु अण्डान्तद्विरजातले ।। १३.२ ।।

(यु)त्यक्तलिङ्गास्तुर्यवशा अण्डनाश उपागते ।
पराष्टमांशावशिष्टकाले श्रहरिगर्भगाः ।। १३.३ ।।

मुक्ता अपि न मुक्ताख्याः पुनर्ब्रह्माण्डसम्भवे ।
विष्णोर्बहिर्गताः कुक्षेः शुद्धसात्वकदेहकैः ।। १३.४ ।।

रमादत्तैर्भोगयोग्यपूर्वोक्तानन्तसात्विकैः ।
अर्थैरभ्युन्नताश्वेतद्वीपस्था हरिमञ्जसा ।। १३.५ ।।

दृष्ट्वा नत्वा प्रसाद्येशं मुक्ताख्यां प्राप्यचाज्ञया ।
अव्याहतेष्टगतयो वैकुण्ठे शुद्धसात्विकैः ।। १३.६ ।।

देहैर्मोदन्ति भूदुर्गाभागयोः श्रीशलालिताः ।
चिन्मात्रदेहैः श्रीभागे न चात्र जडसंस्थिताः ।। १३.७ ।।

वृक्षपक्षिमृगा ह्यब्धिनद्योपि नवकोटयः ।
सरांसि नानाविधबद्धा अपि लोकेषु वै हरेः ।। १३.८ ।।

श्रीभूदुर्गाभाग एते सेवन्ते हरिमञ्जसा ।

स्वाधिक्यस्य सिध्यर्थं स्वानन्दाधिक्यकाङ्क्षिणः ।। १३.९ ।।

केवलं लिङ्गदेहेन भोगभागे वसन्ति हि ।
(भूभागे संवसन्ति हि) निरंशानां सूक्ष्मदेहाः अण्डान्तःसत्यलोकगा तु ।। १३.१० ।।

अनिरुद्धादल्पकालव्यत्ययात्प्रभवन्ति हि ।
लयेण्डनाशात्पुरतः नतत्सू(नाशः सू)क्ष्मतनोर्भवेथ् ।। १३.११ ।।

तृणादारभ्य सन्मर्त्यगन्धर्वास्त(न्त)स्य कृत्स्नशः ।
एषां सूक्ष्मतनुः सृष्टिः क्रमाद्युक्तमतोलयः ।। १३.१२ ।।

स्रष्ट्वैष्वेवामर्त्यगन्धर्वादिकर्म्यन्ते(न्त) देवताः ।
दुर्गाभागस्थानिरुद्धात्सूक्ष्मयुक्ता भवन्ति हि ।। १३.१३ ।।

सृष्टिक्रमाद्व्युत्क्रमेण नाशस्तत्रगताद्धरेः ।
अण्डनाशात्पुरैवेते केवलं लिङ्गमात्रगाः ।। १३.१४ ।।

तृणाद्याशचातात्विकाश्च भूभागे संवसन्ति हि ।
एषां श्रीभागपरिखाभूत श्रीविरजा जले ।। १३.१५ ।।

अण्डनाशात्पुराभग्नलिङ्गानां तुर्यसंश्रयं ।
प्राप्तानां श्रीहरेर्गभे तदावासो भविष्यति ।। १३.१६ ।।

भूमावुत्क्रममाणास्तु देहन्त्यक्त्वा महर्जनाः ।
तपः सत्येषु दुर्गाख्यभागे नीचोच्चकाः क्रमाथ् ।। १३.१७ ।।

वसन्ति देहभोगैस्ते(भोगदेहैः) निरंशानान्तु भोगतः ।
शीर्णा भवन्ति हि अनिरुद्धेन ये चते ।। १३.१८ ।।

प्रविष्टानि भवन्ति हि अनिरुद्धेन ये चते ।
अनिरुद्धे प्रविष्टानि सङ्कर्षणजयाय ते ।। १३.१९ ।।

सृष्टान्यतो लिङ्गमुक्ताः प्रभवन्ति ह्यतात्विकाः ।
भोगेदेहैः स्वोत्तमेषु प्रविष्टाः प्रभवन्ति हि ।। १३.२० ।।

गन्धर्वाणां कुबेरन्तु पितॄणां यम एव हि ।
कृष्टाङ्गसङ्ग गोपीनां सर्वजातिषु सप्ततेः ।। १३.२१ ।।

मितानामाजानजानां सस्त्रीकाणां धनाधिपे ।
तत्समानास्तु ऋषयः शतोनशतकोटयः ।। १३.२२ ।।

एतेषां तुलयोदक्षे ह्यग्निपुत्रगणस्य तु ।
वह्नौ कर्मजदेवानां लयः स्वायम्भुवे मतः ।। १३.२३ ।।

तस्मिन्नेकादशमितामनवोविध्यतात्विकाः ।
तात्विकौ द्वौ सप्तमाद्यौ यौ तौ मनुपदेश्वरौ ।। १३.२४ ।।

नारायणः स्वयं विष्णुः तापसोमनुरीरितः ।
विना तान्स्त्रीन्मनून्स्वायम्भुवे लय उदीरितः ।। १३.२५ ।।

आद्य इन्द्रो हरिर्यज्ञः वायुधर्मोऽश्विनौ क्रमात् ।
षष्टस्तु मन्द्रद्युम्ननामा सप्तमस्तु पुरन्दरः ।। १३.२६ ।।

द्वौ शचीरमणांशौ तौ षडैते तात्विकाः स्मृताः ।
भावीन्द्राः कर्मजाभास्ते तेषामाद्यमनौ लयः ।। १३.२७ ।।

सप्तकानां ऋषीणान्तु शतस्य च लयः स्मृतः ।
दक्षे धर्मे च तत्तुल्यपितॄणां सप्तकस्य तु ।। १३.२८ ।।

तत्समास्त्वष्टगन्धर्वास्त्वष्टोन शतयोषितः ।
उर्वश्याद्यास्तत्समाहि कुबेरं प्रविशन्ति हि ।। १३.२९ ।।

अतो निरंशास्तूत्क्रान्ति योगिनस्तु त(नस्त)दुत्तमाः ।
अतात्विकास्तु भूलोकादुत्क्रान्त महरादिगाः ।। १३.३० ।।

भोगदेहैरुत्तमैस्तु भक्षिताः प्रभवन्ति हि ।
उत्क्रमाणुत्क्रमेण गायन्योगिनस्तानथो जगुः ।। १३.३१ ।।

नित्यसंसारिणः पृथ्व्यां त्यक्त्वा स्थूलन्तु सूक्ष्मतः ।
धर्मे प्रविश्यसन्त्यक्तानाद्यविद्या भवन्ति हि ।। १३.३२ ।।

केचिदत्रैव मुच्यन्ते केचिद्वैमेरुमूर्धनि ।
वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा ।। १३.३३ ।।

त्यक्त्वाविद्यां मिश्रपाकालये नाभौ हरेर्गताः ।
स्वर्गभूम्यादिषु सृष्टौ भ्रमन्ति श्रीहरीच्छया ।। १३.३४ ।।

लयेऽयोग्या गर्भोदगतसङ्कर्षणाग्निना ।
पाताले नित्यनरके भग्नसूक्ष्मकलेवराः ।। १३.३५ ।।

वायोर्गदाप्रहारेण भग्नलिङ्गास्तमोनुगाः ।
लये सृष्टौ तमस्यन्धे पतन्ति श्री हरीच्छया ।। १३.३६ ।।

तत्वाभिमानिनो देवाः ह्यण्डान्तर्बहिरूपतः ।
अनुत्क्रमाः स्वोत्तमेषु विपशेषादि मार्गतः ।। १३.३७ ।।

त्यक्तदेहाः सूक्ष्मदेहैः सत्यलोके वसन्ति हि ।
नष्टे सत्ये ब्रह्मदेहे नष्टे तैः सह पद्मजाः ।। १३.३८ ।।

अण्डनाश उपावृत्ते विशेषं यातितैः सह ।
अत्रस्थितैःसूक्ष्मदैहैः सर्वतत्रस्थसूक्ष्मकैः ।। १३.३९ ।।

एकीभवन्त्येवमेकविंशत्तत्वगणा(ता) अपि ।
व्युत्क्रमेण तु भूम्यादि तत्वोपादान सञ्चये ।। १३.४० ।।

स्थले तथा नाभिमानिवशगे सति विष्णुना ।
अन्नादि नाम्नादेवैस्तदूर्ध्वमूर्ध्वगतक्रमाथ् ।। १३.४१ ।।

त्यक्तान्यावरणान्येते पूर्वमानेन नाशनं ।
यन्ति पूर्वोक्तमानेन अनिरुद्धादिवत्क्रमाथ् ।। १३.४२ ।।

सङ्कर्षणाद्विनष्टे(षु) तु सूक्ष्मदेहेषु कृत्स्नशः ।
तदा सत्वार्ध श्रीभागस्थलक्ष्म्यालक्ष्म्यात्मके जले ।। ४३ ।।
(प्रधानविरजा नद्यामित्यर्थः)

नीचक्रमात्भग्नलिङ्गाः विशन्ति जठरे हरेः ।
पुनरण्डे समुत्पन्ने श्वेतद्वीपे समाप्य च ।। १३.४४ ।।

मुक्तौ भवत्यसौ लोकः क्षीरसागरमध्यगः ।
लक्ष्म्यैश्वतुषष्ठिमितैः विस्तृतं(विसृजः) पुष्कराह्वयः ।। १३.४५ ।।

द्वीपः क्षीराब्धिपरितो मणिवज्रमयद्युतिः ।
तन्मध्यदेशपरितो वर्तुलो मानसोत्तरः ।। १३.४६ ।।

महीधरोयुतोन्नहः द्विसहस्रसुविस्तरः ।
धृढो वज्रमयः सप्तरथचक्रं रवेः स्थितं ।। १३.४७ ।।

तदन्तर्मर्त्यसंसारः तद्बाह्योमर्त्यगोचरः ।
द्वीपायामसमशुद्धवारिसागरवेष्टितः ।। १३.४८ ।।

तस्यापि परितो वज्रलेपिकास्वर्णभूः शुभा ।
चतुर्लक्षन्यूनकोटिविस्तरात्तद्गतो नगः ।। १३.४९ ।।

लोकालोकाभिधोवर्तुलाकारो परितो गिरिः ।
मणिस्वर्णमयः प्राकाराकारो निर्मलो महान् ।। १३.५० ।।

स पञ्चाशत्सहस्रेतत्पञ्चाशल्लक्षविस्तृतिः ।
तावतैवोच्छ्रितस्तस्मातर्धलक्षाधिकोन्नतः ।। १३.५१ ।।

नानावृक्षाश्रयो यत्र भाति पूर्वोदितं जगत् ।
तदष्टदिक्षु शिखराण्यपि छिद्रान्वितानि च ।। १३.५२ ।।

शतोन्नतानि दिग्दन्तिगणास्तदुपरिस्थिताः ।
तच्छिद्रवेष्टितः शुण्डादण्डैरूत्तंभयन्ति ते(तैः) ।। १३.५३ ।।

गोत्रन्ते चान्तरिक्षस्थाः हर्यावेशयुताः शुभाः ।
ते च पूर्वाद्यष्टदिक्षु गर्भोदस्थागतं(ता) भुवं ।। १३.५४ ।।

ऊर्ध्वोश्चित्रैरात्महस्तैर्धरन्ति श्रीहरीच्छया ।
ते मानसोत्तरे मेरौ स्वर्गे रूपान्तरस्थिताः ।। १३.५५ ।।

कुर्वन्ति श्री हरेराज्ञां दिक्पालानां च वाहनाः ।
अनन्तरूपैर्भगवानुपरिस्तंन्नगोर्ध्वगः ।। १३.५६ ।।

ऊर्ध्वाधः शिखरस्पृष्टानन्तमूर्ध्वोति यो हरिः ।
लोकालोकान्तराले तु सूर्येन्द्वृक्षग्रहप्रभाः ।। १३.५७ ।।

वसिष्ठनारदात्र्याद्यानन्तगं स्वर्णभूमिगं ।

वदन्ति पूर्वद्वीपेषु यथा सूर्यो(पूर्वो)दयान्तरे ।। १३.५८ ।।

यथा तथैव गिरिशृङ्गे मैत्रेयपूर्वकाः ।
स्वर्णभूमिमतीत्यैवस्थितमाहुर्नगोत्तमं ।। १३.५९ ।।

तदुक्तमाहुः पैङ्ग्याद्याः तन्नेत्याहुर्मृ(क)कुण्डजः ।
मेरुलोकालोकमध्यप्रदेशस्तु त्रिकोटिकः ।। १३.६० ।।

योजनानां सार्थकोटिसंमितः परिकीर्तितः ।
लोकालोकध(र)भूम्यासहितः परिमाणतः ।। १३.६१ ।।

अन्धन्तमस्तन्नगस्य परितः सप्तकोटिकः ।
यत्र मिथ्याज्ञानयुक्ताः पतन्ति शतकोटिशः ।। १३.६१ ।।

हरीरसुरगुर्वार्यर्विष्णुवैष्णवविद्विषः ।
निष्कारणं साधुयोषिद्वेदशास्त्र विदूषकाः ।। १३.६२ ।।

भक्तिलेशविहीनाश्च नित्यनैमित्तिकोज्झिताः ।
अनन्तपापकरणे भयलेशविवर्जिताः ।। १३.६३ ।।

जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।
साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ।। १३.६४ ।।

प्रादुर्भावविपर्यासः तद्भक्तद्वेष एव च ।
तत्प्रमाणस्य निन्दा च द्वेषा एतेखिला मताः ।। १३.६५ ।।

सम्प्राप्य भारते जन्म विष्णुद्वेषादि पाकतः ।
यथा योग्यं वैपरीत्या परोक्षगुरुविद्विषः ।। १३.६६ ।।

पक्वस्वरूपविद्वेषाद्व्युदस्यात्मीय सञ्चितं ।
भुक्त्वा दुष्प्रारब्धफलं पूर्णं प्रमादिका गतं ।। १३.६७ ।।

सुप्रारब्धफलं विष्णुद्वेषादल्पीकृतं हरेः ।
भुक्त्वागामि व्युदस्यैव ह्यागामि द्वेषयाकृतः(पाकतः) ।। १३.६८ ।।

प्राप्तव्यदुःखमिच्छन्ति स्थूलदेहान्विषाग्निभिः ।
शस्त्रत्यक्त्वा यातनाद्यैः नित्यतामिश्रनामकः(रकाः) ।। १३.६९ ।।

अण्डनाशात्पुरा सूक्ष्मदेहान्तत्र विसृज्य च ।
वायोर्गदाघाततश्च लिङ्गभङ्गो भविष्यति ।। १३.७० ।।

चिरं श्रीहर्यूरुदेशे क्ळप्तदुःखभुजः खलाः ।
पुनरण्डे समुत्पन्ने तमस्यन्धे पतत्यलं ।। १३.७१ ।।

मर्त्याधमा निरंशाश्च पिशाचाः स्वल्पतामसाः ।
तेषु केचित्तत्वदेवाभासरूपास्त्वधस्तने ।। १३.७२ ।।

स्वर्गादिषु चरन्तस्ते पापकर्माभिमानिनः ।
दैत्याश्चराक्षसाश्चैव सांशास्ते बहुरूपिणः ।। १३.७३ ।।

रसातलस्थानिरुद्धात्प्राक्सूक्ष्मं देहमाश्रिताः ।
कर्मानुवशतः स्थूलदेहान्प्राप्य महासुरैः ।। १३.७४ ।।

स्वयं नष्टा परान्साधून्नाशयन्ति कुसाधनैः ।
तमस्यन्धे लक्षनिम्नोध्युपर्यस्थले स्थिताः ।। १३.७५ ।।

प्राप्तव्यदुःखं भुञ्जन्ति शुद्धं तामसविग्रहैः ।
पूयासृङ्मूत्रविष्टाद्यैः तप्ततैलास्त्रशस्त्रकैः ।। १३.७६ ।।

अदृष्टाश्रुतदुःखाप्ति साधनोचितवस्तुभिः ।
दुर्गयाकल्पितैः घोरैः निर्घाताद्यैरनेकशः ।। १३.७७ ।।

सिंहव्याघ्रादिरूपिण्या सह तादृक्स्वरूपवान् ।
अवर्णनीयदुःखौघं वायुर्दास्यति तान्प्रति ।। १३.७८ ।।

तत्प्राप्तव्यमिति प्राहुः क्ळप्तं दुःखं ततोप्यधः ।
भुञ्जन्ति स्वस्वरूपस्थं सर्वरोगव्रणादिकं ।। १३.७९ ।।

सर्वक्षतादिकं नित्यं पूर्णदुःखं व्रजन्त्यलं ।
ततो द्विसप्तकोटिभ्यां(क्यां) घनोदः परितः स्थितं ।। १३.८० ।।

यत्र नारायणोनन्ततनुरूपात्मकश्रिया ।
सदा विहरति श्रीशो ब्रह्माद्यैरपि सेवितः ।। १३.८१ ।।

ततोर्धकोटिसमितमनन्तासनमीशितुः ।
धामण्डखर्परस्पृष्ट विंशल्लक्षोच्च वेदिमथ् ।। १३.८२ ।।

चत्वारिंशल्लक्षामितो भूभागः परिकीर्तितः ।
त्रिंशल्लक्षमितस्तूच्चः श्रीभागः सर्वतः शुभः ।। १३.८३ ।।

तदन्यानन्तगुणितः श्वेतद्वीपसमः स्मृतः ।। १३.८४ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे त्रयोदशोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १४



---

श्रीहंस उवाच

भूमेरधस्तादतलो वितलः सुतलस्ततः ।
अयुतोन्नाहविस्तारस्तलातलमहातलौ ।। १४.१ ।।

रसातलश्च पातालह्येतस्माद्युत्तरोह्यधः ।
द्विसहस्रोरु भूकन्दास्त्वन्तरन्तर्भिलोपमाः ।। १४.२ ।।

महामणिप्रकाशेता सूर्यादिग्रहवर्जिताः ।
मेरुरुत्तरस्तेषां मार्गः सर्वत्र संमतः ।। १४.३ ।।

तेषु सर्वेषु कल्परूहतुल्याश्च पादपाः ।
कामधेनुसमागावः चिन्तामणि समाः शिलाः ।। १४.४ ।।

तत्रत्यानां यथायोग्यं सतामप्यसतां फलं ।
यच्छन्ति स्वच्छसलिलं चापि तत्तद्गतं शुभं ।। १४.५ ।।

न तत्रायासतः सौख्यं अनायासात्सुखावहः ।
भुज्योपयुक्तानन्तोरु वस्तुजालसमाकुलः ।। १४.६ ।।

यावत्काम्य शुभन्तावदायुषष्यमसतामधः ।
भूमौ भारतगा ये च कृते लक्षायुषः स्मृताः ।। १४.७ ।।

त्रेतादिषु त्रिषु दशांशन्यूनायुर्मितानराः ।
आधिव्याधिजरावार्धिक्यायासेत्यभिधादयः ।। १४.८ ।।

युगायुर्नियमात्कालमृत्यवस्तत्र नैव हि ।

तत्रस्थयोः सदसतोर्भक्तिद्वेषौ विना क्वचिथ् ।। १४.९ ।।

तथा विधिनिषेधौ च न च वर्णाश्रमादयः ।
न तत्र कर्मज्ञानादिः पूर्वकर्मभुजोऽ(जौ)खिलाः ।। १४.१० ।।

प्रायस्यांशास्तदुत्पन्नाः भूमौ जाता विधीशयोः ।
वरैःसुरद्विषो विष्णुवायुभ्यामवतारकैः ।। १४.११ ।।

तयोर्मृताः पुनः पूर्वस्थाने प्रारब्धकाम्यके ।
शुभं भुञ्जन्ति निष्काम्यशुभं तेषां न वै क्वचिथ् ।। १४.१२ ।।

काम्यपापान्नारकिनो निष्कामाशुभतस्तनूः ।
इच्छन्तोन्तश्वरादैत्यानिरंशाभारतार्जितान् ।। १४.१३ ।।

काम्यात्तेषु वसन्ति स्म दानवाश्रयभूतयः ।
सदा शेषादिकस्तत्र वसन्ति सति कारणे ।। १४.१४ ।।

हरीच्छया सुरास्तत्र वसन्तः कर्मतो न हि ।
एते हि लक्षभूकन्दमध्ये लोकास्ततोह्यधः ।। १४.१५ ।।

पाताले नरकाश्चाष्टाविंशत्संख्या हरेः कृताः ।
तदधस्तात्पञ्चविंशत्कोटिगर्भाम्बुनिर्मलं ।। १४.१६ ।।

लक्षोनं यत्र लक्ष्मीशो यादोरूपी विराजते ।
सहस्रमूर्ध्नः फणिनस्त्वेकस्मिन्मस्तके तदा ।। १४.१७ ।।

सर्षपायति वै विश्वं निखिलं वारुणीपतेः ।
धराखिलेयं सद्वीपा स सागरकुलाचला ।। १४.१८ ।।

तस्याश्रयोवायुकूर्मः तस्य कूर्माकृतिर्हरिः ।।
तं धत्ते जलमध्यस्था शक्तिराधाररूपिणी ।। १४.१९ ।।

सङ्कर्षणनृसिंहात्मा सहस्रा(संहर्ता)नन्त नामकः ।
तदधस्ताच्चमण्डूको वराहस्तदधस्तटी ।। १४.२० ।।

तमण्डखर्परस्पृष्टा पादमाहुरधस्तले ।
तेषामुपरि भूलोकस्तन्मध्ये मेरुभूधरः ।। १४.२१ ।।

स कञ्जनाभनाभ्युत्थ पद्मनाभबिसाकृतिः ।
मेरुमध्योत्थनालोयमूर्ध्वषट्कञ्जसंश्रयः ।। १४.२२ ।।

शतयोजनविस्तीर्णं सत्यलोकान्तदीर्घवान् ।
वज्रातिसुधृढो गर्भछिद्रं तेने प्रकाशवान् ।। १४.२३ ।।

लक्षोन्नतस्थलो भूम्याः भुवर्लोकस्तदाश्रयः ।
मणिहेमामयो लक्षभूकनन्दो लोकसुन्दरः ।। १४.२४ ।।

सप्तप्राकारकलितः नाना भोगोरुयोगिभिः ।
जडैरर्थैःसत्वगुणप्राचुर्यैः विशदालयैः ।। १४.२५ ।।

भूमेः कोट्युन्नतस्वर्गलोकोरम्योऽतिवर्तुलः ।
कोटियोजनविस्तारे भुवर्लोकवदेव सः ।। १४.२६ ।।

द्विलक्षभूकन्दयुक्तो मेरुनालमुपागतः ।
मणिहेममयोत्तुङ्ग सप्तप्राकारभासुरः ।। १४.२७ ।।

दशयोजनविस्ताराः चतुरस्रासुवीथयः ।
यत्रानेकपताकाश्च दर्पणानेकसङ्कुलाः ।। १४.२८ ।।

मणिशय्यासनानन्तसात्विकोचितसाधनैः ।
पूर्वपुण्यसुवर्णश्रीराज(न्म)मन्दिरमण्डिताः ।। १४.२९ ।।

नानोद्यानाष्टदिक्पालनिलयाष्टकभासुराः ।
मध्येमणिगणभ्राजद्विष्णुमन्दिरमण्डपः ।। १४.३० ।।

सर्वायुधरथाकीर्णचिन्तामण्यादि सङ्कुलैः ।
मुक्तामणिसृजोपेत सर्वाभरणसन्तताः ।। १४.३१ ।।

दिव्यवस्त्रान्नदानेकपारिजातादि सङ्कुलाः ।
अष्टाविंशत्पुरद्वारतोरणाट्टालगोपुराः ।। १४.३२ ।।

हर्म्यायुतवृतानेकगृहद्वर्याश्रितापगाः ।।
मन्दाकिनी मणिमया(त्कल्प)तुल्यरूपाम्बुजाश्रया ।। १४.३३ ।।

परिघारूपतो यत्र भाति यादोगणान्विता ।
सुशब्दस्पर्शरूपेतः सुरसो(स्ये)ति सुगन्धवान् ।। १४.३४ ।।

मर्त्यदेवासुरैर्भोग्य पृथगर्थ समाकुलाः ।
भुवर्लोकस्त्वधोलोकः गुणैःशतगणोत्तरः ।। १४.३५ ।।

ततः दशगुणोद्रिक्ताः लोकाः स्वर्गादयः क्रमात् ।
तथा च तत्तलोकस्थं सुरोपसुरसन्ततः ।। १४.३६ ।।

अधिकारिकसन्मर्त्यगन्धर्वाद्यल्पचेतसां ।
यथायोग्य फलं तेषां आधारा(माधास्यद्वि)विष्णुरव्ययः ।। १४.३७ ।।

ततश्च सार्धकोट्युच्चो महर्लोकस्त्वकर्मकः ।
ततः कोटिद्वयोच्चस्थ जनोलोकः सुपूजितः ।। १४.३८ ।।

ततो सार्धद्विकोट्युच्चस्तपोलोकः सुचिद्गमः ।
ततः कोट्युन्नतोयं सत्यलोकोति भासुरः ।। १४.३९ ।।

त्रिचतुः पञ्चषल्लक्षभूकन्दाज्ञानगोचरः ।
नाभ्युत्थित महानालस्याग्रस्थे सत्यलोकगे(के) ।। १४.४० ।।

ब्रह्मा चतुर्मुखो जातो विष्णुना सर्वलोकसृट् ।
स्वर्लोकसविशेषार्थाः महरादिषु सन्तताः ।। १४.४१ ।।

अजरोत्पत्समानोरु नानामर्त्यगणाश्रयाः ।
एतादृशं लोकपदमाध्याजार्धायुषोन्तिमे ।। १४.४२ ।।

दिने सृजद्धरिस्तत्र प्राकृतेनाभिमानिनी ।
लोकोऽजस्य भुवः कोटित्रयोदशमितो मतः ।। १४.४३ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे चतुर्दशोऽध्यायः

# प्रकाशसंहिता/प्रथमपरिच्छेदः/अध्यायः १५





**प्रकाशसंहिता**
अध्यायः १५
[[लेखकः :|]]

---

श्रीहंसः

सत्यात्कोटिर्द्वादशोर्ध्वः लोको वैकुण्ठनामकः ।
दुर्गाभागस्त्वधोदेशः भूकन्दो दशलक्षकः ।। १५.१ ।।

तस्योपरिष्टाद्भूभागः श्रीभागस्तु तदूर्ध्वतः ।
भूकन्देन त्रयस्तुल्या त्रिंशल्लक्षोन्नतं मितं ।। १५.२ ।।

शिखरं तत्रिभागेषु महाहर्म्याण्यनेकशः ।
मण्यात्मकानि वैद्व्यष्टसंख्यानि च शुभानि च ।। १५.३ ।।

मध्ये वज्रमयानेको पर्यावरणमानि च ।
महरादीनि चत्वारि हयजतं विस्तराणि च ।। १५.४ ।।

भुवनानि यथा भागत्रये वैकुण्ठभूमयः ।
अजाण्डखर्परस्पृष्टाः मध्ये प्राकारसप्तकाः ।। १५.५ ।।

युक्ता पूर्वादिदिक्द्वारा सप्तसप्त हिरण्मयः ।
पुष्करागावर्णयुक्तपद्मरागकवाटकाः ।। १५.६ ।।

इन्द्रनीलनिरोढोरुवज्रपट्टसभासुराः ।
सव्यापसव्यो देदिप्यन्मणि वेदी तटोन्नताः ।। १५.७ ।।

द्वारि द्वारि कृतोदार रत्नकञ्जासना सभाः ।
अनन्तसूर्यभादीप्तलोकमण्डनभूषणाः ।। १५.८ ।।

तेषु तेषु त्रिभागेषु रमानन्तानन्ताधिरूपिणी ।
विपेशानां समस्तानां ब्रह्मणा सह कर्हिचित् ।। १५.९ ।।

वैकुण्ठादि त्रिभागानां दर्शनं भवति ध्रुवं ।
न तत्र संस्थितिस्तेषां महरादिषु संस्थितिः ।। १५.१० ।।

तृणादयो महर्लोके मानुषाद्यास्तदूर्ध्वतः ।
राजानस्तु तपोलोके सत्यलोके नृगायकाः ।। १५.११ ।।

मुक्तानामेव बद्धानामुत्क्रान्ता(मुक्ता)नामिहस्थितिः ।
नृगन्धर्वाजानजान्ता उत्क्रान्तास्तु तपस्थिताः ।। १५.१२ ।।

कर्मदेवाःसमुत्क्रम्य सत्यलोके वसन्ति हि ।
अतात्विका लिङ्गमुक्ता स्थानत्रयगता अपि ।। १५.१३ ।।

भागत्रयेष्वपि न हि प्राकारसंस्थिता भवत् ।
तस्योपरिष्टात्प्राकाराः श्रीभागस्य बहिस्थिताः ।। १५.१४ ।।

चतुष्कोट्यात्मकस्तस्यपरितः परिघात्मिका ।
द्विषट्कोट्या यामयुक्ता बाह्यप्राकाररिरितः ।। १५.१५ ।।

षट्प्राकारास्तदन्तस्था कोट्यन्तरवकाशकाः ।
अष्टकोट्यात्मकस्तस्य (उ)परिष्टाद्बहिरावृतिः ।। १५.१६ ।।

श्रीः कोटियोजनमिता विरजाख्या नदीशुभा ।
यदम्भःस्पर्शनाल्लिङ्गमुक्ताः सद्यो भवन्ति हि ।। १५.१७ ।।

जनास्तत्र हरिर्नित्यं जलक्रीडारतः श्रिताः ।
भूभारोर्ध्वावरणगा भूरेवावराणात्मिका ।। १५.१८ ।।

तन्मध्ये तु ततो लक्षोन्नत श्रीभागभूतले ।
विरजा तत्र द्वौ भागौ मुक्तामुक्ताश्रयौ शुभौ ।। १५.१९ ।।

एवं दुर्गाभागगतो पर्यावरणसङ्गता ।
भूभागदुर्गा भागौ द्वौ मध्यो भूरुन्नताकृति ।। १५.२० ।।

तयोरूर्ध्वावरणतत्सन्धिगेरण्यनामके ।
नद्यौ दुर्गाभूमयाम्बुसमिते श्रीहरिप्रिये ।। १५.२१ ।।

न तत्र लिङ्गभङ्गादि हरिणा चिन्तितं क्वचित् ।
प्रधानपरमोव्योम्नोरन्तरा विरजा नदी ।। १५.२२ ।।

प्रधानात्मकदेहौ तौ ब्रह्मवायू सभार्यकौ ।
भूभागोर्ध्वावरणगो लये सर्वसुरैः सह ।। १५.२३ ।।

सुरान्विनावताराणां आरम्भे च समाप्तिके ।
काले भूभागोर्ध्वगतौ स्यातां क्वापि हरीच्छया ।। १५.२४ ।।

अतो भूभागोर्ध्वदेशः प्रधानमिति कीर्तितं ।
यदधीना यस्य सत्ता तत्तदित्येव भण्यते ।। १५.२५ ।।

तादृक्प्रधान संसृष्टः श्रीभागः परमाम्बरं ।
अतः प्रधानपरमो व्योमगेत्यभिधीयते ।। १५.२६ ।।

निरंशतात्विकानां च ह्यण्डान्तस्तन्निमज्जनं ।
तात्विकानां तु सर्वेषां अनिरुद्धावृति स्थिते ।। १५.२७ ।।

सत्वारणतस्तूच्च प्रदेशे संस्थिते मले ।
श्वेतद्वीपस्वधामभ्यो एकीभूतेति(त्वान्ति)(त्वान्ते) शोभने ।। १५.२८ ।।

श्रीदुर्गाभ्यां च भूम्या च एकीभूते विलक्षके ।
श्रीभागे तत्रगे तस्य परिघा विरजा नदी ।। १५.२९ ।।

तज्जले तु ततः स्नात्वा लिङ्गभङ्गः प्रदृश्यते ।
लये पृथिव्यावरणं व्युत्क्रामद्गच्छतां सतां ।। १५.३० ।।

प्रथमावरणं प्रोक्तं सत्वावरणमन्तिमं ।
तदुच्चाव्याकृताकाशो व्योमशब्देन भण्यते ।। १५.३१ ।।

अनन्ता(अन्तिमा)वरणव्योम्नोरन्तरा विरजेत्यतः ।
सोत्पत्यङ्गेषु देवानां अङ्गसायुज्यमिष्यते ।। १५.३२ ।।

श्रीभागवैकुण्ठतद्गवासुदेवस्य चक्रिणः ।
अनन्तरूपे सर्वाङ्गसायुज्यं ब्रह्मणो भवेथ् ।। १५.३३ ।।

मुक्तस्य च स्वरूपेण ह्यणोर्वृद्धिर्न युज्यते ।

नोहानिः पुनरावृत्तिदुःखाज्ञानभयादयः ।। १५.३४ ।।

नीचनीचाल्पमुक्तानां पूर्तिः स्वानन्दमात्रतः ।
नैवोत्तममुदाकाङ्क्षा सेवाध्यानादिकं(क) फलं ।। १५.३५ ।।

न हरेर्नपरस्यापि मुद्भुजस्ते स्वमुद्भुजः ।
प्रलयत्वं क्वचित्सृष्टिः काले श्रीभाग एव हि ।। १५.३६ ।।

ब्रह्मा चिन्मात्रदेहेन ह्यन्तप्राकारगो मतः ।
रुद्रादयः षष्टमगाः इन्द्राद्याः पञ्चमस्थिताः ।। १५.३७ ।।

चतुर्थस्थाः सूर्याद्या तृतीयस्थाः मरुद्गणाः ।
द्वितीयप्राकारसंस्थाः पर्जन्याद्याः सुरोत्तमाः ।। १५.३८ ।।

चिन्मात्रदेहैः श्रीभागे आद्ये कर्मजपूर्वकाः ।
एते मुक्तास्तु भूभागे दुर्गाभागे तथैव च ।। १५.३९ ।।

शुद्धसात्विकदेहैस्तु प्राप्तास्तु सुखिनो हरेः ।
चतुर्लक्षाधिकाशीतिलक्षजीवगणस्य तु ।। १५.४० ।।

बिम्बात्मा तत्तादाकारो सदा तद्गः प्ररक्षति ।
सर्वजीवगणामुक्ताः सन्ति वैकुण्ठमन्दिरे ।। १५.४१ ।।

जीवा(न)नां पात्य(पायो)पि हरिः स हि रूपान्तरैर्विभुः ।
सर्वजीवसमात्यल्परूपैः स्थूलैश्चतादृशैः ।। १५.४२ ।।

अनन्तकोटिकल्पीयमुक्तोपास्यः त्रिभागगः ।
तादृग्रूपानन्तयुक्तश्रिया सह चरत्यसौ ।। १५.४३ ।।

तौ तत्र पूजोपयोग्यानन्तानन्तार्थरू(पिका)पकौ ।
तत्र स्वारूपिककिरीटादि शङ्खचक्रादि साधनैः ।। १५.४४ ।।

सुदर्शनाद्यायुध्यैश्च गन्धमाल्यादिकार्हणैः ।
नैवेद्यवस्त्रा(सङ्गाद्यैः)शय्याद्यैः रूपैः स्वैः स्वयमर्चितः ।। १५.४५ ।।

श्रियासदैक्यमापन्नः मोदरूप्यनुमोदते ।
श्रीः देव(वि)मखिलाकारा तैर्विष्णुं पूजयत्यलं ।। १५.४६ ।।

तैर्न्निमाल्यैः विष्णुदत्तैः रमैकी भवति स्फुटं ।
भूदुर्गभागयोरेवं शुद्धसात्विकसाधनैः ।। १५.४७ ।।

तन्मानिनी श्रीःसम्पूज्य तन्निर्माल्यैरजादिकान् ।
मुक्तास्तोषयति प्राज्ञाः गन्धमाल्यादिभिः शुभैः ।। १५.४८ ।।

ते विमानरथाण्डोला डोलालोल विशेषकैः ।
शय्याभरणवस्त्राद्यैः करिहर्यादिभिः क्वचिथ् ।। १५.४९ ।।

समानैरुत्तमजनैः फलपुष्पाक्षतादिभिः ।
स्वस्व्येष्टतरुणीभिश्च जलक्रीडादिभिस्तथा ।। १५.५० ।।

अव्याहृतेष्टगतयः पूजाया सत्कथादिभिः ।
पुनरावृत्तिरहिता नमन्ति निखिला अपि ।। १५.५१ ।।

नवकोट्यो हि देवानां पदस्था देवतागणाः ।
लिङ्गसूक्ष्मस्थूलदेहयुक्ताःसर्वे सभार्यकाः ।। १५.५२ ।।

सेवार्थं श्रीहरेर्दुर्गाभागे सम्यग्वसन्ति हि ।
ते कामधुक्कल्पवृक्षचिन्तामणिसमुत्थितैः ।। १५.५३ ।।

पूज्योप(युक्ता)योगानन्तार्थैः जलेन श्रीकरार्पितैः ।
तया सम्पूजितहरिनिर्माल्यैः पुनरार्पितैः ।। १५.५४ ।।

पवित्रिताङ्गापरितः सञ्चरन्त्यपि मोदिनः ।
सायुज्यमपि सालोक्यं सामीप्यं सर्वदा हरेः ।। १५.५५ ।।

सारूप्यमपि मुक्तिर्हि चतुर्था किल भण्यते ।
विष्णुर्मुक्तान्स्वदेहस्थान्स्वस्वानन्दैकभोजिनः ।। १५.५६ ।।

करोति तद्धि सायुज्यं तत्सुराणां च नीचगं ।
सामीप्यादि त्रयं कर्मदेवानां युज्यते क्वचिथ् ।। १५.५७ ।।

तद्भिन्नदेवदासानां सारूप्यादि द्वयं मतं ।
एकलोकनिवासाख्यं सालोक्यमितरस्य तु ।। १५.५८ ।।

शुद्धसात्विकदेहेषु चतुर्भुजसमन्विताः ।
दरारिपीताम्बरिणो यदि सारूप्यमीरितं ।। १५.५९ ।।

जयश्च विजयश्चैव बलश्च प्रबलस्तथा ।
चण्डः प्रचण्डश्च तथा नन्दश्चापि सुनन्दकः ।। १५.६० ।।

कुमुदः कुमुदाक्षश्च तथा भद्रसुभद्रकौ ।
सुधामदामनामानौ विष्वक्सेनवशे स्थितौ ।। १५.६१ ।।

रूपैश्चतुर्भिसर्वेपि चतुर्दिक्ष्वपि सप्तसु ।
अन्तः प्राकारगद्वारमारभ्यद्वारपालकाः ।। १५.६२ ।।

नन्दिनी हरिपादोत्था दुर्गाभागशुभोदका ।
परिघा स तु वैकुण्ठश्चतुरस्रः प्रकीर्तितः ।। १५.६३ ।।

बाह्यण्डव्यापिनो विष्णोर्लोके वैकुण्ठनामकः ।
कोट्युच्छ्रितानन्तमूर्ध्नः मुखे मूर्ध्नि सुचित्यते ।। १५.६४ ।।

गर्भोदकान्तर्देहस्थखर्परास्पृष्टपादुकः ।
स्वरतस्यानन्तासनाख्यः कटिः पीताम्बरात्मकः ।। १५.६५ ।।

घनोदकं कटितटी मेरुस्तन्नाभिमध्यगे ।
योजनानां पञ्चविंशत्कोटिगं मेरुपर्वताथ् ।। १५.६६ ।।

अजाण्डखर्परं दिक्षुविदिक्षूर्ध्वमधः स्मृतं ।
मह्यादिभिरावरण्यैर्दशभिस्तु दशादिकैः ।। १५.६७ ।।

दत्तं चावरणान्येत्यन्यूर्ध्वशिष्टानि सर्वशः ।
अधः पादानि तद्विष्णोः स्थलान्याहुर्मनीषिणः ।। १५.६८ ।।

शिलावत्प्रतिमा विष्णोरजादेरभिमानतः ।
अण्डंलोकाश्च देवानां क्रमाद्धेहास्तु मानिनः ।। १५.६९ ।।

एवं विधाजाण्डकोट्यनन्तात्मकरूपकैः ।
सावकाशं सञ्चरद्भिः विलासद्रोमकूपतः ।। १५.७० ।।

हरेरेवं जगत्तस्य वशेज्ञात्वा विशेषतः ।

विराड्रूपस्य च हरेः सत्यलोकः शिरस्यलं ।। १५.७१ ।।

लोकालोकस्तस्य हरेः कटिसूत्रे विचिन्त्यते ।
पीताम्बरः स्वर्णभूमिः शुद्धोदाब्धिः कटिस्तले ।। १५.७२ ।।

कटिप्रधानस्थिगणे चिन्तयेन्मानसोत्तरं ।
मूलाधारे जाम्बवाख्यं केसरेषु इलावृतं ।। १५.७३ ।।

जठराद्यास्तु तद्रेखा मेरुस्तन्नाभिमध्यगः ।
मेरूपरिस्थलोकेश भवनानि च सर्वशः ।। १५.७४ ।।

बीजकोशेषु सञ्चिन्त्य मुच्यते पुरुषर्षभः ।
भुवर्लोकं तस्य नाभौ स्वर्लोकं हृदि चिन्तयेथ् ।। १५.७५ ।।

महर्लोकमुरःस्थाने जनलोकं गले हरेः ।
तपोलोकं मुखे ध्यात्वा सत्यलोकं तु मस्तके ।। १५.७६ ।।

षडष्टद्वादशाद्व्यष्टद्विसहस्रदलान्यपि ।
नाभ्यादिकानि पद्मानि भुवरादीनि वै हरेः ।। १५.७७ ।।

पातालं तस्य पादे तु प्रपदेषु रसातलं ।
महातलन्तु जघने जङ्घयोश्च तलातलं ।। १५.७८ ।।

सुतलं जानुदेशे तु ऊर्वो(पि तु)स्तु वितलातले ।
विराड्रूपस्य चाङ्गेषु लोकाश्चिन्त्या सुचेतनैः ।। १५.७९ ।।

पद्मनाभस्य नाभ्युत्थं प्राकृतं पद्ममूर्जितं ।
संसृष्टतत्वसञ्जातं भूतत्वादिकसङ्गतं ।। १५.८० ।।

सर्वलोकात्मकं तस्य शिखाग्रे सत्यनामके ।
आद्यः ब्रह्मांशतो जातो विष्णुनैव चतुर्मुखः ।। १५.८१ ।।

सृष्टः स्वयं द्रष्टुमिच्छन्चतुर्दिक्षुविधिर्हरिं ।
मुखानि लेभे चत्वारि नापश्यद्धिक्षु वै स्वयं ।। १५.८२ ।।

ततस्तन्नालमध्यं तच्छिद्रादन्तर्गतं हरिं ।
पश्यामीति तपश्चक्रे न तत्राविददीश्वरं ।। १५.८३ ।।

सत्यभागधोसंस्पृष्ट संस्पृष्टाम्बुस्थया श्रिया ।
वायुरूपस्थया धाता भीता विष्णोर्विभीरभूथ् ।। १५.८४ ।।

इति श्री प्रकाशसंहितायां प्रथमपरिच्छेदे पञ्चदशोऽध्यायः सम्पूर्णः

श्री कृष्णार्पणमस्तु

==========================================================================

द्वितीयपरिच्छेदः

अथ प्रथमोऽध्यायः

श्रीहंस उवाच

कञ्जस्थितः स्वयं ब्रह्मा नापश्यत्सर्वगं हरिं ।
यत्नवानपि तत्पूर्वमनसीत्थमचिन्तयथ् ।। २,१.१ ।।

भावरूपाज्ञानमानिन्यपि दुर्गाजगद्गुरोः ।
नित्यानुग्रहपात्रत्वात्पुत्र(उच्च)त्वाच्च रमा मम ।। २,१.२ ।।

स्वोपासनारतत्वाच्च नाज्ञानं भावरूपकं ।
इच्छतिस्म सलिङ्गस्यानाद्यविद्यायुतस्य च ।। २,१.३ ।।

स्वकीयस्येन्दिरेषन्मे ह्यभिप्रायं शिवादयः ।
अविदित्वान्यथाब्रूयुः दुर्गाज्ञानप्रदैव सा ।। २,१.४ ।।

न समर्थाज्ञानदाने विधेरित्यसुराश्रयाः ।
इत्यज्ञावाक्यैर्मा(तुर्मेऽयशसः कारणं वचः ।। २,१.५ ।।
मेह्ययशः कारणं न च

तत्राहं संमतो मातुः कीर्त्यर्थं प्रार्थयामि तां ।
दुर्गामिति तथा चक्रे तेनादात्सस्य संशयं ।। २,१.६ ।।

दत्वाज्ञानं क्षणार्धन्तु स्वभर्तुर्भक्तिमातनोत् ।
भयशोकौ च तेनासावज्ञोभीतो बभूव हा ।। २,१.७ ।।

तदज्ञनं भावरूपं चतुर्वारं हरेर्भयं ।
शोको द्विवारं रमया प्रार्थितो जगदीश्वरः ।। २,१.८ ।।

ददावलोचनाभाव दशायां नियमः कृतः ।
वृत्यज्ञानस्य बहुशः सम्भवाद्ब्रह्मणोपि तु ।। २,१.९ ।।

संख्याविशेषस्योक्तत्वात्भावाज्ञानं वदन्ति तत् ।
ततस्त्वित्थं संशयोभूत्त्रिवारं पद्मजन्मनः ।। २,१.१० ।।

स्वतः पद्ममिदं जातं किंपुंसान्येन केनचित् ।
इति सञ्चिन्त्य पुंस्यैव जातं नैव जडस्य तथ् ।। २,१.११ ।।

स्वतः प्रवृत्तिर्घटते ज्ञानेच्छादेरभावतः ।
अहं पद्मेन वा जातः मत्सृष्टिः पुरुषेण वा ।। २,१.१२ ।।

इति संश्चित्य मत्सृष्टिः पुरुषेणै नो वा ।
इति निश्चित्य स पुमान्स्वतन्त्रो वास्वतन्त्रकः ।। २,१.१३ ।।

इति सञ्चिन्त्यास्वतन्त्रः कथं मां स्रष्टुमर्हति ।
तस्मात्स्वतन्त्राज्जातोहं तं पस्यां पुनरुत्थितः (पश्येयं) ।। २,१.१४ ।।

इति नालं प्रविश्यान्तः नापश्यत्पुनरुत्थितः ।
कञ्जस्थ आस तज्ज्ञानं विपरीतमजस्य हि ।। २,१.१५ ।।

बहिर्नदृष्टः स कथमन्तर्दृष्टि प(क)थं व्रजेत् ।
ततः प्रचण्डवातोत्थाद्धूमिर्मज्जलकम्पिताथ् ।। २,१.१६ ।।

पद्मात्पतन्निव महाभयग्रस्थो बभूव ह ।
तदा क्षणार्धं शोकोभूद्ब्रह्मणः परमेष्ठिनः ।। २,१.१७ ।।

सृष्ट्वा कालं महाकालं मानिनं विधिमातनोत् ।
कालावासाने त्वासन्ने तङ्ग्रनिष्यति चाददथ् ।। २,१.१८ ।।

आस्यं नृसिह्मस्तु तदा भयशोकान्वितो भवत् ।
अत्रैव तत्कारणेन भावाज्ञानयुतो भवेथ् ।। २,१.१९ ।।

नान्यत्र दुःखाज्ञानाद्यं य(म)दुक्तं तन्मृषैव हि ।
ततस्तपतप इति विष्णोरेव वचो शृणोथ् ।। २,१.२० ।।

ततो ध्यानं जगद्धातुः कृत्वा पश्यत्ससर्वगं ।
ब्रह्मा ददर्श वैकुण्ठं हरेर्लोकं महाद्भुतं ।। २,१.२१ ।।

पूर्वोक्ताशेषसुमहाविशेषार्थगुणोन्नतं ।
दृष्ट्वा तुष्टाव नत्वेशं कृतार्थोभूत्सकञ्जजः ।। २,१.२२ ।।

सर्वाधिपत्यं तस्यादात्सर्वज्ञत्वं विकुण्ठपः ।
तद्वशोभूत्स्वतन्त्रोपि भगवान्भक्तवत्सलः ।। २,१.२३ ।।

द्विसप्तमनुभोगार्हकालं धातुरहो व्यधात् ।
यथा तथा रात्रिकालं व्यभजद्भगवान्विभुः ।। २,१.२४ ।।

तत्राद्यरात्रिभागे तु साङ्गंब्रह्माण्डमातनोत् ।
तत्राण्डनामको विष्णुः प्रविश्यान्तः समेधयथ् ।। २,१.२५ ।।

रात्रिद्वितीयभागे तु पद्मनाभस्य नाभितः ।
संसृष्टस्यान्यभागेन लोकपद्मं व्यधाद्धरिः ।। २,१.२६ ।।

पद्माग्रगं च ब्रह्माणं तदज्ञानभयादिकं ।
तच्छान्तिं तस्य तद्भक्त्युद्रेकं तस्य तपस्थितिं ।। २,१.२७ ।।

तस्मिन्पूर्णानुग्रहं च कृतवान्हरिरूर्जितं ।
रात्रि तृतीयभागे तु वैकुण्ठमतिसुन्दरं ।। २,१.२८ ।।

ससर्ज तल्लोकपतिरजस्यादर्शयद्धरिः ।
स दृष्ट्वा तं विदध्यौ मुक्तामुक्तेश्वरं हरिं ।। २,१.२९ ।।

चतुर्थांशे निशायांश्च विराट्सृष्टिं ददर्श ह ।
दृष्ट्वा द्विसप्तलोकेषु विराट्देहस्थितान्सुरान् ।। २,१.३० ।।

सूक्ष्मदेहस्थान्पूर्वमनिरूद्धात्ससूक्ष्मकान् ।

तथाजस्तत्र तत्रैव स्थूलदेहयुतान्व्यधाथ् ।। २,१.३१ ।।

अण्डनिर्माणकाले तु ह्यसंसृष्टानि सर्वशः ।
तत्वान्यादाय संयोज्य तत्रिधाव्यभजद्धरिः ।। २,१.३२ ।।

अण्डं तदादितश्चक्रे द्वीतीयेनाब्जमातनोत् ।
तृतीयं तु त्रिधाभित्वा पुनरेकैकशास्त्रिधा ।। २,१.३३ ।।

देवोपदेवमर्त्यानां स्थूलान्यादैस्त्रिभिर्व्यधात् ।
द्वितीयांशैस्त्रिभिस्थूलान्यासुराणां श्री हरीच्छया ।। २,१.३४ ।।

इति श्री प्रकाशसंहितायां द्वतीयपरिच्छेदे प्रथमोऽध्यायः

# प्रकाशसंहिता/द्वितीयपरिच्छेदः/अध्यायः २



---

श्रीहंसः

चक्रेस्थूलशरीराणि यद्धेशेस्थाप्ययान्विराट् ।
तेषां तदुपयुक्तार्थान्जडानि विविधानि च ।। २.१ ।।

सर्वस्थूलशरीराणि उपादानान्यजः स्वयं ।
विराट्दत्तानि सङ्गृह्य क्रमात्कालानुसारतः ।। २.२ ।।

तत्तद्गुणक्रियाजातिरूपलक्षणसम्पदः ।
व्यवहाराश्रयाचारवेषभाषास्वरूपकान् ।। २.३ ।।

दानमाना(न्नपानार्ह)शनायाशनार्हपूर्वानन्तार्थसञ्चयान् ।
चतुर्लक्षाधीकाशीतिलक्षजीवगुणोचितान् ।। २.४ ।।

विराडुक्तान्विराडुन्तान्स्तद्भावज्ञस्तथाकरोत् ।
यथोत्तरत्र स्थूलोपि न दृष्टस्तेन तच्छ्रुतं ।। २.५ ।।

तत्पूर्वं पद्मनाभोत्थ त्रिविक्रमपदाम्बुजात् ।
दक्षिणाद्युधृता गङ्गा तस्याङ्गुष्ठनखाग्रतः ।। २.६ ।।

विशीर्णाजाण्डमध्योर्ध्वरन्ध्रात्क्ष्मावरुणोर्ध्वगं ।
अम्भः प्रागग्नितत्वस्था(स्थं) प्राकृताङ्घ्रिभिरक्षितं ।। २.७ ।।

विष्णोः पादात्समुद्भूतं तद्वार्याण्डान्तराविशत् ।
(ए)तत्मण्डुलुगं कृत्वा ब्रह्मा विष्णवङ्घ्रिमज्जनं ।। २.८ ।।

चकार तेन तद्वारि गङ्गाख्या सुसरद्वरा ।
अतो विष्णवङ्घ्रिजां ब्रह्मकमण्डलुसमुद्भवं ।। २.९ ।।

वदन्ति सा सुषुम्ना हि ब्रह्माण्डव्यापिनो हरेः ।
निशायाः पञ्चमांशे तु ब्रह्मेशाद्याखिलामरान् ।। २.१० ।।

सृष्ट्वा वैकुण्ठलोकस्थदुर्गाभागगतान्व्यधात् ।
सेवार्थं तद्गतानन्तरूपस्य श्रीहरेः श्रियः ।। २.११ ।।

तेषामुचितविज्ञानं हरेः सेवां उपादिशत् ।
षष्टमांशे निशायाश्च पुनः सर्वान्सुरोत्तमान् ।। २.१२ ।।

अजो सृजत्स्वसेवार्थं तांश्च(ते च) पूर्वोक्तरीतितः ।
सप्तप्राकार(के)गान्सप्तलोकेशं तोषयत्यलं ।। २.१३ ।।

तावत्सत्याधस्थलस्पृग्वार्यण्डपरिपूरितं ।
महोग्रवायुना शुष्यन्महर्लोकादधोविशथ् ।। २.१४ ।।

सप्तमांशे निशीथिन्याः पुनर्देवानजोसृजत् ।
तेषु प्रधानान्सर्वान्मनसो देहतोऽसृजथ् ।। २.१५ ।।

तेषु प्रधानान्शेषादीं तपोलोकेव्यधादजः ।
तत्र लोकपतिः साक्षात्सङ्कर्षणमनामयं ।। २.१६ ।।
आराधयतोऽन्य सुरान्मनसा देहतो सृजत् ।
इन्द्रकामौ जनोलोके तृतीयोतावजो व्यधाथ् ।। २.१७ ।।

प्रद्युम्नन्तावभजतां सृष्ट्वा तौ स्वावरामरान् ।
अनिरुद्धादिकान्धाता महर्लोकगतान्व्यधाथ् ।। २.१८ ।।

अनिरुद्धं भजन्तस्तेवृसृजन्स्वावरामरान् ।
अष्टमांशेत्रियामाया सनकादीन्पितामहः ।। २.१९ ।।

सृष्ट्वा सृष्ट्वैतन्नियुक्तास्तदाज्ञानाचरन्द्रुतं ।
ततः प्रकुपिताद्धातुः रुद्रो एकादशात्मकः ।। २.२० ।।

जातोभूत्सपत्नी(क्षी)कः ससृष्ट्यर्थमजोदितः ।
तपस्तप्त्वाथकालेन पीते स्वर्गान्तवारिणी(णा) ।। २.२१ ।।

अजेनावाप्यसस्वर्गभूतान्प्रेतांश्च राक्षसान् ।

नन्दिनं मातृकाःसप्त पिशाचान्लोकभीकरान् ।। २.२२ ।।

भक्तान्सुरांशानपि दुर्भावयुक्तान्दिगम्बरान् ।
क्रूरसृष्टिं ततो ज्ञात्वा ब्रह्मा तं प्रत्यषेधत ।। २.२३ ।।

ततोजः स्वाकं देशेन नारदं त्वसृजदृषीं ।
दक्षं दक्षाङ्गुष्टतोजस्तन्वा भृगुमचीक्ळपथ् ।। २.२४ ।।

मरीचीं मनसा नेत्रेणात्रिमाङ्गिरसं मुखात् ।
कर्णरन्ध्रात्पुलस्त्यं च पुलहं नाभिदेशतः ।। २.२५ ।।

करात्क्रतुं वसिष्ठं च प्राणात्कामाच्चगाधिजं ।
छायया कर्दमं बुध्यारुचिं व्यजनयद्विभुः ।। २.२६ ।।

ऋगादि देवान्पद्मोत्थः पूर्वाद्यास्यैः क्रमाद्व्यधात् ।
भारतं पञ्चरात्राणि पुराणानि स्मृतिस्तथा ।। २.२७ ।।

पूर्वादिभिर्व्यधादास्यैस्तथा वर्णाश्रमादिकान् ।
भृगुं मनुं बुधशनी चतुर्वर्णप्रवर्तकान् ।। २.२८ ।।

चकार(रा) कालावयवान्दिशस्तदभिमानिनः ।
यज्ञान्हृदापुण्यधर्मो पृष्टेनाधर्मविस्तृतिं ।। २.२९ ।।

तथा पञ्चवि(धा)ज्ञानं दुर्गां तदभिमानिनीं ।
अहोरात्रे पक्षयोश्च लज्जां मूर्धोष्टतोसृजथ् ।। २.३० ।।

अधरोष्टात्ततो लोभं नाडिभ्यो व्यसृजन्नदीः ।
अस्थिभ्यः पर्वतान्कुक्षेः सर्वसागरमानिनः ।। २.३१ ।।

मेघान्केशैर्लोमजातैर्वृक्षा(श्चैव लतादिकान्)न्गुल्मान्लतान्वितान् ।
चतुर्लक्षाधिकाशीतिलक्षयोनिषु तात्विकान् ।। २.३२ ।।

दशसंख्यामितान्धाता व्यसृजच्चान्य चेतनान् ।
कर्मदेवादिकान्देवाः क्रमाज्जातास्तु कालतः ।। २.३३ ।।

शतं गन्धर्वाप्सरसां त्रिंशच्चारणरक्षसां ।
शतं सिद्धास्तथान्यासु सप्ततिःसर्वजातिषु ।। २.३४ ।।

आजानजाः कुबेरोत्थास्तेभ्य एव निरंशकाः ।
देवदासा निरंशाश्च पद्मकल्पादनन्तरं ।। २.३५ ।।

स्वयम्भुवेन्तरे भूमौ जाताः सर्वत्र सङ्गताः ।
क्षणदानवमे भागे महीदासहयाननौ ।। २.३६ ।।

सनत्कुमारमछाख्यावादिशेतां मनुं विधेः ।
अवतीर्याखिलान्वेदान्सारं चैव(वेद सारं) पुराणकं ।। २.३७ ।।

पञ्चरात्रं महाशास्त्रं श्रीमद्भागवतं शुभं ।
दशमे तु निशाभागे पद्मनाभस्य कर्णयोः ।। २.३८ ।।

कल्पितात्तामसाद्भूरि कीकसादासतूरिपू ।
तदा कुसुमनाभस्य निशांशदशमे शुभे ।। २.३९ ।।

कल्पितात्तमसाद्भूरि कीकसादासतूरिपू ।
मधुश्च कैटभश्चैव राक्षसौ दुर्मदोद्धतौ ।। २.४० ।।

कदामेरुरूर्ध्वदेशस्थं पीत्वा तावज्जलं स्थितं ।
रूपान्तरेणाब्जभवं प्राप्य युद्धाय राक्षसौ ।। २.४१ ।।

आह्वयामास तु ब्रह्मा तावाहाहं हि दुर्बलः ।
इत्युक्त्वा स हरिं दध्यौ हयग्रीवाह्वयं हरिः ।। २.४२ ।।

व्यक्तो भूद्ब्रह्महृदासताभ्यां चिरमयोधनं ।
कृत्वा हत्वाच्छाद्यकुन्तं मेधसा मेदिनीं व्यधाथ् ।। २.४३ ।।

क्षणदैकादशांशे तु ब्रह्मा मेरुस्थितः स्वयं ।
पिशाचान्दानवान्दैत्यान्निरंशान्सांशरूपकान् ।। २.४४ ।।

एतान्विष्णुद्विषो योग्यान्राक्षसांश्च कलिंस्तथा ।
व्यसृजत्तानधोलोकवासिनः कालतोकरोथ् ।। २.४५ ।।

अजेयत्वमवध्यत्ववरं तेषामदाद्विधिः ।
कालेन भारते जन्म प्रतिमन्वन्तरेष्वपि ।। २.४६ ।।

यथायोग्यं जन्मलब्ध्वा तपस्तप्त्वा शिवाद्वरं ।
प्राप्य विप्रार्यगुर्वादिगोसुरद्वेषिणः सदा ।। २.४७ ।।

भविष्यथेति तेषां तु वरं प्रादादथाब्जजः ।
परशुक्लत्रयं हित्वा छिन्नभागवतेष्वलं ।। २.४८ ।।

प्रविश्य बुद्धिव्यामोहं कल्पयित्वा क्वचित्क्वचित् ।
योग्यतातिक्रमोद्भूतपुण्यं नाशयथेति च ।। २.४९ ।।

शरीरतत्वोपादानस्थितसर्वोत्तमान्सुरान् ।
सर्वेर्(व)तत्त्वो(त्वा)पचयगा भवन्तो भीषयन्त्यथ ।। २.५० ।।

पापदुःखादि सम्बन्धो भवतां च भवेदिति ।
विष्णुविस्मृतियुक्तानां शरीरेषु सातामपि ।। २.५१ ।।

असतां मिश्रबुद्धीनां अभिमानित्वमस्तुवः ।
मिथ्याभिमानिनो दैत्याः देवास्तत्वाभिमानिनः ।। २.५२ ।।

सर्वतत्वेष्वथ कलिर्जीवमानी दुराग्रहात् ।
देहस्थ देवताः पूर्(णर्)वपुण्य(भुजः)सौख्यभुजः क्रमाथ् ।। २.५३ ।।

पापदुःखभुजश्चान्ये देहमान्युभयात्मकाः ।
अन्तर्बहिस्थजीवानां किञ्चिदुःखं भवत्यपि ।। २.५४ ।।

दैत्यावेशान्न वायोर्हि दैत्यावेशः कदाचन ।
जीवमान्युत्तमो ब्रह्मा देहस्थो मध्यमः स्वयं ।। २.५५ ।।

अधमस्तु कलिर्जीवमान्येव हि सुरासुराः ।
इति तत्वार्थवित्तेषां ब्रह्मादादुचितं वरं ।। २.५६ ।।

शुद्धोदसागरबहिर्महर्लोके तदूर्ध्वतः ।
गर्भोदके तु(च) दैत्यानां आवेशो नास्ति सर्वथा ।। २.५७ ।।

एतदन्यत्र दैत्यानां स्थित्यै प्रादाद्वरं विभुः(धिः) ।
द्वादशांशे तु(स)तामस्याः ब्रह्माण्डस्थाम्बुनिर्गमे ।। २.५८ ।।

चिन्त्यतोजस्य वै घ्राणात्घ्रोणी रूपी बभूव ह ।

घ्रोणी रूपी वराहात्मा हरिस्त्ववततार च ।। २.५९ ।।

स तु श्वेतवराहाख्यः ब्रह्मणा सं(यु)स्तुतोऽसृजत् ।
यज्ञाभिमानिनो यज्ञान्मन्त्रतन्त्रार्त्विगोषधीः ।। २.६० ।।

तिलदर्भाश्वपश्वाज्यहवींषिसमिधः क्रमात् ।
सत्राणि सोमसदनं रा(र)म्भभैश्यादिकान्व्यधाथ् ।। २.६१ ।।

युपाग्नीन्स्पृषदाज्यं च फलान्यप्यसृजत्किटिः ।
तदा हयग्रीवनामा राक्षसो घोरदर्शनः ।। २.६२ ।।

अजस्य मुख(ख्य)तोव्यक्तं गुरुं वेदाभिमानिनं ।
निगृह्यागात्रदा वेदाः अपपाठतिरोहिताः ।। २.६३ ।।

तदा प्रार्थितो मच्छरूपी जलमुपाविशत् ।
हत्वा हयशिरस्कन्तं वेदानुद्धरदीश्वरः ।। २.६४ ।।

तदा धात्रार्थितश्चादिसूकरोण्डगतं जलं ।
अशामयद्ध्रुवमधोलोकांश्च विमलान्व्यधाथ् ।। २.६५ ।।

सूर्यादयो ग्रहाः सर्वे तदाद्याः सप्रकाशकाः ।
तदादि कल्पं तं प्राहुः वाराहमिति सज्जनाः ।। २.६६ ।।

रात्रौ त्रयोदशांशे तु पुरीं बर्हिष्मतीं व्यधात् ।
वराहात्माह्यादिमनोरावासार्थमशेषवित् ।। २.६७ ।।

तदैवाष्टस्वयंव्यक्ताः पुराणि विविधानि च ।
नद्यश्च देवखा(घा)ताश्च वनान्युपवनानि च ।। २.६८ ।।

तदा सर्वोपयुक्तानि सर्वत्र व्यसृजद्विधिः ।
चतुर्दशांशे रात्रेस्तु दिक्पालान्सर्वलोकगान् ।। २.६९ ।।

सर्वत्राज्ञापयद्दिक्षु विदिक्षु च यथाक्रमं ।
तत्प्रागेव समुत्पन्ना ब्रह्मणा लोकपालकाः ।। २.७० ।।

विराड्देहगतस्तुर्यो ह्यनिरुद्धा(क्षिगो विभुः)भिधो हरिः ।
अतलादिष्वयोग्यानां सूक्ष्माण्य(प्य)जमदर्शयथ् ।। २.७१ ।।

(सं)स तान्पद्मजसम्भूतः(तो) मेरुमध्यस्थकञ्जजः ।
ऊर्ध्वमुधृत्य च स्थूलदेहयुक्तांश्चतान्पुनः ।। २.७२ ।।

तत्तल्लोकेषु संस्थाप्य मुख्यप्राणवशान्व्यधात् ।
तदा ब्रह्मवरोद्भूतो हिरण्याक्षो हि राक्षसः ।। २.७३ ।।

पञ्चभूतावरां भूमिं गृहीत्वाथ रसातलं ।
विवेश तन्मोचनाय वराहात्माण्डजार्थितः ।। २.७४ ।।

रसातलं प्रविश्यैव मोचयित्वा भुवं त्वरन् ।
तं गदापाणिना(मा) क्रुद्धं प्रापयित्वैव भारत ।। २.७५ ।।

युध्वा स्वं दंष्ट्राग्रहतं कृत्वा तं नरके व्यधात् ।
ततो मेरुगतो धाता सव्यात्स्वायंभुवं व्यधाथ् ।। २.७६ ।।

देहापसव्यतस्तस्य शतरूपां सतीं व्यधात् ।
भुगुदक्षमरीच्यादीन्तपसे(स)मनुमादिमं ।। २.७७ ।।

आहूयाजः प्राहसृष्टिं बृंहणाय सतां गतिः ।
शतरूपा पतिः प्राह तपस्तप्त्वा सुदारुणं ।। २.७८ ।।

वराहोद्धारणाप्तश्च कियत्कालं विचक्षणः ।
वराद्धरेश्च स्त्रीपुंसो योगात्स्यैष्विविधीरितां ।। २.७९ ।।

स्त्रिपुंसयोगाद्धाव्यं च सृष्टिमेतां विधीरितां ।
सृत्वा तस्यामजनयत्पुत्रौ द्वौ लोकविश्रुतौ ।। २.८० ।।

प्रियव्रतोत्तानपादौ तिस्रः कन्याश्च सत्तमः ।
आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ।। २.८१ ।।

तत्राद्यायामृचेर्जज्ञे यज्ञनामा रमापतिः ।
तेनैव सह सम्भूता दक्षिणा नामिका रमा ।। २.८२ ।।

अजावयोनिजौ द्वावप्राकृतदेहयुतौ परौ ।
पुत्रिकापुत्रधर्मेण यज्ञमात्मसुतं मनुः ।। २.८३ ।।

चकार दक्षिणा यज्ञे दक्षिणामानिनी च सा ।
तुषिता नाम तत्पुत्राः सम्बभूवुः सुरोत्तमाः ।। २.८४ ।।

तत्त्वाभिमानिनः(तैर्नीचातात्विकाः) सर्वे बभूवुः नवकोटयः ।
आकूतेर्देवहूतेश्च प्रसूतिरनुजातुया ।। २.८५ ।।

दक्षस्या ससती तस्मातस्यां षोडशकन्यकाः ।
अभवन्नर्कपुत्रस्य धर्मस्यैव त्रयोदश ।। २.८६ ।।

पुत्र्यस्त्वेकाग्नये दत्ता तस्यां त्रेता(तत्रा)ग्नयोभवन् ।
आह्वनीयोगर्हपत्यो दक्षिणाग्निरिति त्रयः ।। २.८७ ।।

तेषामेका दक्षसुता भार्या(दत्ता) तस्यां त्रिभिः क्रमात् ।
पृथक्पृथक्पञ्चदशपुत्रा अग्निस्वरूपकाः ।। २.८८ ।।

आसन्नाद्या यज्ञभुजो मध्यमा हव्यभोजिनः ।
अन्त्याः कव्यभुजः पूर्वै पञ्चाशत्संमिताग्नयः ।। २.८९ ।।

एकन्यूना दक्षसुता ज्येष्ठा दत्ता शिवस्य तु ।
धर्मान्वरूत्वती पुत्रान्पञ्चाशन्मरुतोऽसृजथ् ।। २.९० ।।

विश्वेदशासन्विश्वायां वसवौष्टौ वसूद्भवाः ।
रुद्रा असंस्मरुद्राण्यां भूतायां भूतना(य)मकाः ।। २.९१ ।।

उपदेवाश्च साध्यायां अन्यास्वपि च धर्मतः ।
उपदेवाश्च देवाश्च बभूवुर्हि बहुप्रजाः ।। २.९२ ।।

धर्मस्य ते पदस्थाश्च सर्वे(सर्ग)वासोचिता मताः ।
तदुत्थिताश्च भावीनाः प्रायशो ह्यपरोक्षिणः ।। २.९३ ।।

प्रागुक्तास्तात्विकाश्चैकरूपेण भुवि भारते ।
उषित्वा भाविसत्कर्मज्ञानभक्त्यादि काङ्क्षिणः ।। २.९४ ।।

शुभाशुभं च प्रारब्धं भोक्तुं योग्यास्ततो भवत् ।
ते च द्वीपाद्रि वर्षेषु भारते(ता)न्येषु सर्वशः ।। २.९५ ।।

सुप्रारब्ध्यैक भोगार्हाः धर्माधर्मोत्थसम्भवाः ।

# प्रकाशसंहिता/द्वितीयपरिच्छेदः/अध्यायः ३



---

हरिः ओं

तदा मेरौ तु सुज्येष्ठः कामधुक्कल्पवृक्षकौ ।
चिन्तामणिं रूपभेदैः स्वर्गोपस्वर्गगान्व्यधाथ् ।। ३.१ ।।

तदाविधिः सर्वजीवबिम्बरूपाण्यचिन्तयत् ।
स्वयं तथा तथाभूत्वा सृजत्ता(वछ)दृक्शरीरिणः ।। ३.२ ।।

स्वर्गस्थानां पदस्थानां सर्वमन्वन्तरेष्वपि ।
भूमौ हर्यावतारे तु तदाज्ञामकरोद्विधिः ।। ३.३ ।।

दुष्प्रारब्धस्य भोगायागामि सत्साधनाय च ।
सुराणां हरिसेवार्थं अवताराण्यनुक्रमाथ् ।। ३.४ ।।

पुनस्तत्तन्मूलरूपैरेकीभावं स सर्वदा ।
भुवं स्पृशन्त्विति तथा ते च कुर्वन्त्यजाज्ञया ।। ३.५ ।।

एधमानद्विडेषां हि सर्वदा भारतास्थितिं ।
नाज्ञापयधरिस्तेन तथा चक्रे सतां(तान्) विधिः ।। ३.६ ।।

ततो धातात्मदेहस्थतत्वान्युच्चावचानि च ।
संसृष्टानि तदीशांश्च मेरुस्थः सव्यचिन्तयथ् ।। ३.७ ।।

देहमध्येत्वधोनाभेर्मूलाधारं स पुष्करं ।
चतुर्दलं(शं) स्वर्णनिभं मायाद्यादलदेवताः ।। ३.८ ।।

अनिरुद्धमुदानं च सुषुम्ना (दि)हि त्रिकाश्रयं ।
तन्मध्यसम्भवा नाडी सुषुम्ना सूक्ष्मरूपिणी ।। ३.९ ।।

एका शाखादिरहिता स्वर्णवर्णा पराश्रया ।
भूम्या स्वायम्भवेनापि रक्षितेब्जे समुत्थिता ।। ३.१० ।।

च्छिद्रान्विता च सा सप्तप्राणादि मरुदाश्रया ।
मध्ये ज्वलन्ती तत्पार्श्वजातयोः पिङ्गलेल(ड)योः ।। ३.११ ।।

मूर्धां ता नाभिकञ्जादि षट्पद्मानां समाश्रया ।
षट्दलं नाभिकमलं नीलाद्यास्तद्दलाधिपाः ।। ३.१२ ।।

इषन्नीलोपेतभागे गोरिकारक्तिमान्विते ।
स्थितं प्रद्युम्ननामानं नागाख्यप्राणसेवितं ।। ३.र्१३ ।।

मरुतः प्रवहादींश्च सप्ततद्गान्व्यचिन्तयेत् ।
ते द्वे ऊर्ध्वमुखे हृद्गकञ्जमाहरधोमुखं ।। ३.१४ ।।

नाभे द्व्यष्टाङ्गुलोर्ध्वस्थ सुषुम्नाष्टदिगुत्थितैः ।
दलैरधोमुखैरुद्यद्भानुवर्णैस्थाष्टभिः ।। ३.१५ ।।

दशाङ्गुलिमितान्तर्(ग)द्गर्(भा)भावकोशावहैः शुभैः ।
परस्परं दृढाश्लिष्टसंयुक्ताग्राङ्गुलं भवेथ् ।। ३.१६ ।।

हृत्कजं तत्रगीर्देवी भारत्या सहमानिनी ।
प्राणाः कूर्मात्मकस्तत्र वसवो दलदेवताः ।। ३.१७ ।।

स्थानेशो हि तदन्तस्थो दशाङ्गुलमितो हरिः ।
तदीय हृदयाकाशमण्टपं श्रीस्वरूपकं ।। ३.१८ ।।

दुर्गाभूश्रीभागभेदैर्भागत्रयसमन्विता ।
दुर्गाकन्दात्मिका चैव भूर्मध्ये नालरूपिणी ।। ३.१९ ।।

तदूर्ध्वगे तु श्रीभागे रमाकञ्जस्वरूपिणी ।
वेदिका तु त्रिभागस्था सार्धाङ्गुलि दृढा मता ।। ३.२० ।।

तन्मण्टपं मणिमयं चतुर्द्वारं शुभास्पदं ।
सुगन्धैर्मणिदीपैश्च रम्भास्तम्भैर्मनोरमं ।। ३.२१ ।।

तोरणैः पूर्णकुम्भैश्च पताकछत्रमण्डितं ।
मणिस्तम्भैमौक्तहारैः नाना श्वेताङ्कुरैरपि ।। ३.२२ ।।

श्रीभागं कञ्जसंमानः मूलेशाख्यो हरिस्वयं ।
कञ्जोपरीन्दुसूर्याग्निमण्डलान्युपरिस्फुटं ।। ३.२३ ।।

रम्यैव दिव्यशय्याभूत्कमनीयोपबर्हणा ।
तस्मिन्स्वरूपशेषाभ हरिरूर्ध्वफणोन्नतः ।। ३.२४ ।।

तस्योपरि रमाचित्रासनरूपा तदूर्ध्वगा ।
प्राज्ञात्मा स तु जीवेशो जीवोयद्वशगः सदा ।। ३.२५ ।।

चक्रशङ्खगदापद्महस्तः स तु चतुर्भुजः ।
किरीटकुण्डललसन्नूपुराङ्गदभूषणः ।। ३.२६ ।।

हारश्रीवत्सकण्ठस्थ कौस्तुभादैरलङ्कृतः ।
रत्नाङ्गुलीयकटककटिसूत्रादि सत्कृतः ।। ३.२७ ।।

पिताम्बरोति सर्वाङ्गसौन्दर्यसुभगोचितः ।
स विश्वतोमुखोप्येकमुखवद्भाति नीलदृक् ।। ३.२८ ।।

स्थानेश मूलेशयुक्तः समुपास्यो निरंशकैः ।
मण्टपाधः प्रदेशस्थशक्तिराधाररूपिणी ।। ३.२९ ।।

कूर्मशेषश्च भूः क्षौरवार्धिपाद्वीपरूपिणी ।
श्वेतां रमां संविचिन्त्य निरंशैरित्यचिन्तयथ् ।। ३.३० ।।

उरुस्ताल्वोर्भ्रुवोर्मध्ये शिरस्यूर्ध्वमुखानि च ।
कञ्जानि श्वेतवर्णानि द्विषड्व्यष्टदलैस्तथा ।। ३.३१ ।।

द्वाभ्यां सहस्रदलकैर्युक्तानि दलदेवताः ।
आदित्याः प्रथमे पद्मे इन्द्राद्यास्तत्रदेवताः ।। ३.३२ ।।

देवतास्तु त्रृतीयेब्जे भारती च सरस्वती ।
मूर्ध्नैको बहुरूपेण वायुः सर्वदलाधिपः ।। ३.३३ ।।

नारायणो हरिः कृष्णो वासुदेवस्तदीश्वरः ।

कृकलो देवदत्ताख्यः सूत्रनामा मरुत्पतिः ।। ३.३४ ।।

मरुतः सप्तसप्तापि पञ्चस्वपि हृदारिषु ।
सुषुम्ना नालजातानि पद्मान्येतानि सप्त च ।। ३.३५ ।।

गुणत्रयात्मिकानाडी सुषुम्ना वेदपारगैः ।
स्यैका शाखादि रहिता गर्भेछिद्रान्वतापि च ।। ३.३६ ।।

सरस्वती तदन्तर्गा नदी वारिस्वरूपिणी ।
हैरण्मयी वैध्युतीति वज्रिका भास्वतीति सा ।। ३.३७ ।।

नामभिः संयुतालोकाः भूराद्याः तत्रसंस्थिताः ।
भूर्भुवस्वर्गलोकेशा महरादीश्वरः(श्वराः) क्रमाथ् ।। ३.३८ ।।

भूविघ्नेशेन्द्रानिरुद्धकामशेषाब्जजा मताः ।
कट्यूरुद्वितये जानुजङ्घगुल्पो भयाङ्घ्रिषु ।। ३.३९ ।।

अतलाद्याश्रितादेवा देहे देवेश सेवकाः ।
मित्राग्न्यस्त्रपवारीशमयमन्दयमाः क्रमाथ् ।। ३.४० ।।

देहेप्येवं विराड्देहधारिणं तन्मितोवति ।
सुषुम्ना मूलदेशोत्थे गङ्गायामुनवार्धरे ।। ३.४१ ।।

पिङ्गलेले रक्तनीलवर्णे सव्यापसव्यगे ।
गर्भछिद्रान्विते षट्त्रिंशत्सहस्रप्रभेदिनी ।। ३.४२ ।।

पृथक्पृथक्सव्यनाड्यो महत्तत्वात्मिका मताः ।
त्रिधा विभक्ताः पादान्तं द्विषट्साहस्रसंमिताः ।। ३.४३ ।।

दक्षिणे दक्षपादान्तं नाड्यस्तावन्मिताः क्रमात् ।
पिङ्गला ऊर्ध्वदेहेषु व्याप्तास्तावन्मिताः शुभाः ।। ३.४४ ।।

अधोमध्योर्ध्वगास्तास्तु सप्तास्य पथमाश्रिताः ।
सप्तसन्त्येव विवराः घ्राणास्य श्रुति नेत्रगाः ।। ३.४५ ।।

सप्तास्यपथनामानो गोलकाः सप्तकीर्तिताः ।
सप्तोर्ध्वनाड्यो हृत्कञ्जाधस्थलाद्वामपार्श्वगाः ।। ३.४६ ।।

पुनर्हृत्कं चोर्ध्वदेशात्सव्यमावृत्य पिङ्गलाः ।
सप्तास्य पथगाः तत्र(सूर्यो) वह्न्याद्या वत्सरेश्वराः ।। ३.४७ ।।

उत्तरायणमासेशाः दिनेशाः शुक्लपक्षपाः ।
परशुक्लत्रयं ह्यस्मिन्ह्योत एवाभिमानिनः ।। ३.४८ ।।

सूर्यादि सर्वदेवानां नामवाच्यास्तु पिङ्गलाः ।
तस्यां ब्रह्माभिमानी गी ऋजवस्त्वपरोक्षिणः ।। ३.४९ ।।

प्राणापाना विलायां च पिङ्गलायां च वर्ततः ।
रूपैः षड्विंशत्सहस्रैस्तासु तौ भारतीयुतौ ।। ३.५० ।।

तथानिरुद्धप्रद्युम्नौ दक्षिणे पुं स्वरूपतः ।
स्त्रीस्वरूपेण वामे तु तावद्रूपैश्च तास्वलं ।। ३.५१ ।।

तादृक्पाणस्वरूपस्थौ ब्रह्मरुद्राद्युपासितौ ।
दक्षिणायनमासेशाः रात्रीशाश्चैव देवताः ।। ३.५२ ।।

कृष्णपक्षेश्वरारुद्रविपशेषाः सभार्यकाः ।
अहङ्कारात्मकेलायां देवाः सर्वेभिमानिनः ।। ३.५३ ।।

आनन्दविज्ञानमयौ पिङ्गलेलाधिपौ क्रमात् ।
व्यानात्मा सर्वसन्धिस्थः उदानोब्रह्मनाडिगः ।। ३.५४ ।।

सुषुम्ना ब्रह्मनाडीति समानःसर्वदेहगः ।
अधो मध्योर्ध्वगाः सप्तसप्तेलानाडिका क्रमाथ् ।। ३.५५ ।।

सप्ताश्वमार्गपथगाः ऊर्ध्वेलाः पिङ्गला यथा ।
हृत्कञ्जाधोभागतस्ताः सव्यं प्राप्य तदूर्ध्वतः ।। ३.५६ ।।

अपसव्यं पुनः प्राप्यसप्ताश्वपथगाः क्रमात् ।
भूम्या(धूमा)दि देवताशब्दैरिलावाच्यासमस्तशः ।। ३.५७ ।।

ऋग्वेदसूक्तभागेषु बृहतीःऋक्सहस्रयुक् ।
सूत्रद्व्यष्टादशैकोनैः पूर्णरुक्प्रभविष्यति ।। ३.५८ ।।

पादस्तु नववर्णात्मा तादृक्पादचतुष्टयैः ।
रुक्तत्संयुक्ताक्षरेतावर्णाद्वासप्ततीरिताः ।। ३.५९ ।।

द्वासप्ततिसहस्राणि वर्णाः सर्वरुगाश्रिताः ।
द्वासप्ततिसहस्रेषु पिङ्गलेलाह्वयासु च ।। ३.६० ।।

नाडीषु तत्तद्वर्गेषु वाच्यरूपाण्यचिन्तयेत् ।
सुषुम्नायाश्चतुर्दिक्षु हृत्कञ्जाधः समाश्रितं ।। ३.६१ ।।

मनोबुद्धिरहङ्कारश्चित्तञ्चेति चतुर्विधं ।
तत्रेन्द्रकामौ भार्यौ तौ तद्विशेषाभिमानिनौ ।। ३.६२ ।।

श्रोत्रे दिग्देवताश्चन्द्रस्त्वक्चाहं प्राणनामकः ।
नेत्रयोर्भास्करो जिह्वामानी वरुणरिरितः ।। ३.६३ ।।

दश्रौ घ्राणाश्रितावेते तद्विशेषाभिमानिनः ।
वक्त्रे(वाचि) वह्निः करेदक्षो जयन्तः पादयोर्ध्वयोः ।। ३.६४ ।।

मित्रः स्वायंभुवौ पायूपस्थयोरभिमानिनौ ।
घ्रा(प्रा)णो मरुच्छब्दमानीत्वपानः स्पर्शगस्ततः ।। ३.६५ ।।

व्यानोरूपः रसमानी ह्युदानो गन्धसंस्थितः ।
समान एते मात्रासु विशेषादभिमानिनः ।। ३.६६ ।।

भूदेवी मानिनी पृथ्वीः अबात्मा वरुणः स्मृतः ।
अग्निस्तेजोमयो वायौ प्रवहः प्रभुरीश्वरः ।। ३.६७ ।।

आकाशमानी विघ्नेशः भूतेष्वेते विशेषपाः ।
केशालि(स्थि)त्वङ्मांसनखरूपा भूर्देहगा मताः ।। ३.६८ ।।

वारिरक्तात्मकं देह जठराग्निस्तु तैजसं ।
वायुः श्वासात्मकः काये ह्यवकाशो नभस्तनौ ।। ३.६९ ।।

प्रत्यक्षसिद्धसर्वेषां सत्वं बा(बो)ध्यं न हि क्वचित् ।
सुदुर्गन्धौ घ्राणवेद्यौ देहे जिह्वेन्द्रियप्रियः ।। ३.७० ।।

शुभाशुभरसो रूपं चक्षुर्वेद्यं कलेवरे ।

शीतोष्णादिः त्वचावेद्यः स्पर्शः शब्दे(ब्दः) श्रुतिप्रिये(यः) ।। ३.७१ ।।

मात्राधृषीकविषयाः सत्याबाध्यान हीरिताः ।
वचनादानगमनोत्सर्गभोगादिसाधनं ।। ३.७२ ।।

कर्मेन्द्रियपञ्चचार्थक्रियाकारेति(रिण) (बा)बध्यते ।
सत्यं शृणोतिस्पृशतिपश्यत्यत्ति च जिघ्रति ।। ३.७३ ।।

श्रेत्रत्वङ्नेत्ररसनाघ्राणस्तत्वानि तान्यतः ।
अर्थक्रियाकराण्येव विबोध्यानीहवेदगं ।। ३.७४ ।।

मनश्च श्रुतिहेतुत्वात्सप्तं(त्यं) च शरीरगाः ।
अहङ्कारापादकत्वात्पिङ्गला ममतास्पदा ।। ३.७५ ।।

नाड्यो दौर्बल्यसमये भान्तिसव्यापसव्ययोः ।
पुंसांस्त्रीणामायादिव्यञ्जकाः प्रभवन्ति हि ।। ३.७६ ।।

अतः सत्याच्च(श्च) बहुषु ज्ञानाज्ञानप्रवर्तकाः ।
गुणाः सत्वादि देहस्थाः सत्यास्तदभिमानिनः ।। ३.७७ ।।

देवाः सत्याः केवलस्य जडस्यस्थित्ययोगतः ।
देहानां च सदेहानां देहबन्धमतिकृतां ।। ३.७८ ।।

दुःखास्वदत्वाद्देहाप्तिकारणं सत्यमेव हि ।
कर्माणि द्विविधं वेदेषूक्तानुक्रमसच्चसथ् ।। ३.७९ ।।

सुखदुःखप्रदं तेन सत्यावेदाःसमस्तशः ।
देशे काले कृतङ्कर्म फलदत्त्वेन तौ वृतौ ।। ३.८० ।।

तत्कर्मफलभोक्तारो जीवाः सत्याः सलिङ्गकाः ।
भग्नलिङ्गा विमुक्ताश्च श्रुत्युक्ताश्च कृताः स्मृताः ।। ३.८१ ।।

इहान्यत्राल्प बहुलज्ञानाज्ञानादि योगिभिः ।
सदसत्तारतम्यं च सप्त(त्य)मेते स्वतन्त्रकाः ।। ३.८२ ।।

चिच्चेत्यरूपा एतेषां देहयोगविवर्जिताः ।
नियन्ता पुरुषश्रेष्ठः न च एतत्प्रयुज्यते ।। ३.८३ ।।

तस्माल्लक्ष्मीपतिर्व्याप्तः स्वतन्त्रः श्रुतिचोदितः ।
निर्दोषो नित्यसुगुणः सदा नारायणो हरिः ।। ३.८४ ।।

एवमाध्यात्मिकं सत्यम्(प्तम्) अधिभूतं बहिस्थितं ।
सर्वाङ्कुरोत्पादकत्वात्भूःसत्वा(त्या)खिलकारणाथ् ।। ३.८५ ।।

अभस्मरनादि योग्यत्वात्पालकद्दाहादि साधनं ।
वह्निश्च शोषको वायुरवकाशप्रदानियथ् ।। ३.८६ ।।

तत्कारणानि मात्राश्च तद्गतानीन्द्रियाणि च ।
सत्या(प्ता)न्येवं समस्तानि संसृष्टान्यण्डगानि च ।। ३.८७ ।।

एतन्मूलान्यसंसृष्टान्यपि सत्यानि सर्वशः ।
सङ्गृह्येतद्विनिर्माया याति सत्यः सहत्यजः ।। ३.८८ ।।

केचिन्निरङ्गा निर्देहा ज्ञानादि गुणवर्जिताः ।
निरंशो खण्डरूपश्च सर्वादृश्योनिरूपिताः ।। ३.८९ ।।

अनामरूपो फलदस्त्वनुपास्यो विचारितः ।
ब्रह्मैकन्तु जडं सर्वे ब्रह्मण्यारोपितं मृषा ।। ३.९० ।।

शुक्तौ रजतवद्रज्जौ सर्पवत्प्रतिभाति च ।
अज्ञानं कल्पितं तद्धि शुक्तिज्ञानाद्धि बाध्यते ।। ३.९१ ।।

विचारिते सति हि सा शुक्तिर्नरजतं भवेत् ।
अतो बोध्यं मृषाभूतं मिथ्या तद्रजतं यथा ।। ३.९२ ।।

वस्तुस्वरूपं ज्ञानेन कल्पितत्वाच्चतत्तथा ।
अज्ञानकल्पितं ब्रह्मण्येतद्विश्वं प्रकल्पितं ।। ३.९३ ।।

ब्रह्मण्यारोपकृज्जीवो ब्रह्मान्यो नैव वर्तते ।
निरंशमपि तद्ब्रह्मत्वज्ञानावृतमञ्जसा ।। ३.९४ ।।

अनन्तरूपकं भुङ्क्ते नानायोनिसमुद्भवं ।
तस्यज्ञानमुपाध्युत्थं सत्योपाधिर्न विद्यते ।। ३.९५ ।।

मिथ्या साज्ञानजतत्वान्नाज्ञानं सत्य(त्व)मुच्यते ।
तदाज्ञानेन जीवस्थं जीवस्याभावतः स्वतः ।। ३.९६ ।।

निर्विशेषब्रह्मणि तु ज्ञानाज्ञानेन वर्ततः ।
अतो न ब्रह्मनिष्टं तत्तज्ञानतदुपाधिजं ।। ३.९७ ।।

एवं मिथ्याभूतकालकर्मदेशागमादिभिः ।
भ्रमद्ब्रह्म च कल्पान्ते ब्रह्ममूल स्वरूपकं ।। ३.९८ ।।

ज्ञात्वा तत्रैक्यमापन्नो न पुनर्जायते भुवि ।
मुक्तस्यापि न चाज्ञानं नेन्द्रियाणि न क्वचिथ् ।। ३.९९ ।।

निर्विशेषे परेब्रह्मण्यैक्यमेतादृशं खलु ।
तदज्ञानं न सन्नासत्सदसन्न च तर्हिकं ।। ३.१०० ।।

अनिर्वाच्यं तन्निवृत्तिर्मुक्तिरित्यभिधीयते ।
पूर्वापरेषु कालेषु सृष्टिन्मेत्यपि ते जगुः ।। ३.१०१ ।।

एतद्धि दुर्मतं सन्तो नाङ्गीकुर्वन्तितात्विकाः ।। ३.१०२ ।।

इति श्री प्रकाशसंहितायां द्वितीयपरिच्छेदे तृतीयोध्यायः

# प्रकाशसंहिता/द्वितीयपरिच्छेदः/अध्यायः ४



---

श्रीहंस उवाच

साङ्गज्ञानात्मकतनुमनन्तगुणपूरितं ।
साङ्गासद्धीषयन्त्वीशं वेद्यैः शास्त्रैर्निरूपितं ।। ४.१ ।।

अनन्तनामरूपाढ्यं स्व स्व योग्यफलप्रदं ।
विचारितमुपास्यं च रमा ब्रह्मादिभिः सदा ।। ४.२ ।।

स्वभिन्नस्वावरानन्तमुक्तामुक्ताणुजीवकैः ।
सेवितं श्रीपतिं व्याप्तं चेतनाचेतनस्य तु ।। ४.३ ।।

सत्यस्य सृष्टिकर्तारं हरिं दुःखादि भोगिनं ।
जानन्ति तस्य चाज्ञानं क्वचित्क्वापि न युज्यते ।। ४.४ ।।

मिथ्याभूताज्ञानमस्तीत्यत्र मानं न विद्यते ।
अज्ञाना भवितास्तष्ठोपाधिर्निवह युज्यते ।। ४.५ ।।

सिद्धौ ज्ञाने तु तज्जोपाधिः सिद्धै तदन्वये ।
सर्वस्याज्ञानयोगस्तदभावात्तदेवन ।। ४.६ ।।

अज्ञानाभावतोज्ञासी अधिकाधि न विद्यते ।
अज्ञानाभावतस्तन्निवृत्तिरूपं न हि क्वचिथ् ।। ४.७ ।।

अज्ञानकल्पितं शास्त्रं नैवाज्ञाननिकृन्तनं ।
इति हेयं तन्मतं हि बद्धस्येशो विमुक्तिदः ।। ४.८ ।।

विश्वं सत्यं नैव मिथ्या न बाध्यं सत्यकारणं ।
प्रत्यक्षादिप्रमाण्यैस्तु सिद्धं नारोपितं जगथ् ।। ४.९ ।।

नार्थक्रियाकारि शुक्तौ प्रतीतं रजतं जगत् ।
अर्थक्रियाकारि तेन तद्दृष्टान्तो न युज्यते ।। ४.१० ।।

दृष्टान्तरहितो यत्तु जगन्मिथ्यात्वकारणं ।
न भवेत्तन्मते ब्रह्म दृश्यत्वाच्च तथा भवेथ् ।। ४.११ ।।

मिताकाशादि वेदोक्तं विष्णुनेति नतन्मृषा ।
न च न्यायोक्तमिथ्यात्वे मानं तन्मतापि न ।। ४.१२ ।।

श्रुतिर्नित्यापौरुषेया दुर्वाक्यैर्न च दूष्यते ।
इति ज्ञात्वा विधिर्विष्णोर्माहात्म्यं ज्ञानबोधयथ् ।। ४.१३ ।।

सत्याशेषजगन्नाथः सत्यसत्साधनेन च ।
सत्यैर्जीवैःसदोपास्यः सत्यसत्यविमुक्तिदः ।। ४.१४ ।।

इति मेरुस्थितो ब्रह्मा निशान्ते यज्ञमीश्वरं ।
अभिषिच्य सपत्नीकं सर्गे सम्पार्थ्य योजयथ् ।। ४.१५ ।।

अपीपलधरिः स्वर्गं सर्वदेवगणेडितः ।
ततः स्वायंभुवमनुं शतरूपा समन्वितं ।। ४.१६ ।।

अभिषिच्य विधिर्भूमौ बर्हिष्मत्यामवासयत् ।
भावीनश्च पदस्थाश्च उपदेवाः सहस्रशः ।। ४.१७ ।।

मनुं पर्यचरन्प्रीत्या ते निरंशास्ततो भवन् ।
विधिस्ततो मय(सू)सुतमन(त)वेधाद्बलाह्वयं ।। ४.१८ ।।

स तु षण्णवती (प्रा)मायाः स्वविजृम्भणतोसृजत् ।
स्वैरिण्यश्चैव कामिन्यः पुंश्चल्य इति त्रिधा ।। ४.१९ ।।

तज्जाताभिसमुद्भूताः भोगिन्यो बहुशो मताः ।
कृत्वाकाम्यं भारतेस्मिन्मर्त्याधम पुरोगमाः ।। ४.२० ।।

अधो लोकेषु विहरः एताभिः सह दुर्मदाः ।
अनेकाः दानवोपेताः बलस्तदधिनायकः ।। ४.२१ ।।

तदधस्ताच्च वितले त्रिवृद्भूतगणावृतः ।
कैश्चिद्रक्षौ (गु)गणैर्युक्ताः भ(वा)वन्त्यास्ते भवः किल ।। ४.२२ ।।

तया सदा रमति सः तद्वीर्याधाटकादिभिः ।
ः नदी तदन्तगा तत्र शुष्मत्यप्यग्निवायुभिः ।। ४.२३ ।।

यन्नदीवारिपानेन अधोलोकेषु संस्थिताः ।
मदोद्धता नरानार्यः क्रीडन्ति सुचिरं सदा ।। ४.२४ ।।

तदधस्ताच्च सुतले प्रतिमन्वन्तरेष्वपि ।
नामरूपविभेदेन प्रह्लादः सानुगोऽवसथ् ।। ४.२५ ।।

वैवस्वतान्तरे विष्णोर्वामनाय पदत्रयं ।
याचमानाय पुत्राय कश्यपस्य महात्मनः ।। ४.२६ ।।

बलिर्विरोचनसुतो ददौ लोकत्रयं विभुः ।
सोपीन्द्राय पदस्थाय तस्मादादाय दत्तवान् ।। ४.२७ ।।

लोकत्रयं हि देवानामनुजो वटुरूपदृक् ।
पयोव्रतप्रभावेन्यैवाविर्भूतः स कश्यपाथ् ।। ४.२८ ।।

इन्द्र प्रवासतः खिन्नमातृतुष्ट्यै जगत्पतिः ।
बलिं विरोचनसुतं महाभागवतोत्तमं ।। ४.२९ ।।

स्थापयामास तल्लोके स्वयं तद्वारपालकः ।
बभूव वामनः सर्वे स्वरूपामरसेवितः ।। ४.३० ।।

तस्य त्रिकोटिलोमभ्यो वायुस्तावत्स्वरूपकः ।
वाण्या तावद्रूपवत्या वामनस्यार्चको(का) भवथ् ।। ४.३१ ।।

विन्ध्यावली पतिस्तत्र बलिस्तिष्ठति सानुगः ।
तदधस्त(त्रि)न्मयो विष्णुः भक्तोप्यखिलदानवैः ।। ४.३२ ।।

अर्थितो दानवकुले जातस्तक्षा भवत्पुरा ।।
तल्लोकपः सदैत्यानां त्रिपुराणि व्यचीक्लपथ् ।। ४.३३ ।।

अभेदाभेद्यरूपाणि स्वर्णरौप्यायसानि च ।

स निर्ममे पुरास्तिस्रः स्वर्णरौप्यायसीमयः ।। ४.३४ ।।

कामया तेषु तेष्वेते संस्थिता त्रिपुरौकसः ।
विहारान्तरे ह्यस्मिन्सर्वान्जन्तूनपीडयन् ।। ४.३५ ।।

सुरास्तत्पीडया रुद्रशरणं ययुरूर्जिताः ।
रुद्रः पृथ्वीरथं कृत्वा रथाङ्गं शशिभस्करौ ।। ४.३६ ।।

देवान्कृत्वा हयानब्जभवं कृत्वैव सारथिं ।
शेषं मौर्व्यां विधायेशो पतत्रं(तं) च खगेश्वरं ।। ४.३७ ।।

कृत्वा विष्णुं बाणरूपं स्वयमेकक्षणे हरः ।
त्रिपुराणि ददाहेशः सर्वलोकस्य शङ्करः ।। ४.३८ ।।

त्रिपुरासुरपुत्राद्यैः सहा वसति तत्र हि ।
वैवस्वतेन्तरे दक्षपत्न्याः कश्यपभार्यकाः ।। ४.३९ ।।

त्रयोदशासं(शाः)स्तपसा तासु पुत्रानवाप सः ।
विवस्वान्शक्रवरुणमित्राः पूषार्यमाभगः ।। ४.४० ।।

सविता त्वष्टृपर्जन्यो धातायां वामनो वटुः ।
अदितेस्तनयादित्यां हिरण्याक्षहिरण्यकौ ।। ४.४१ ।।

दनौ तु दानवा गावो महिष्यः सुरभीसुताः ।
तान्माया पक्षिणोरिष्टा यातुधानाश्च निरृतिः ।। ४.४२ ।।

इलायां भूसुरा आसन्श्वादयः परमासुताः ।
पोष्टाया चैव बेतालाः कार्द्रवेया महाहयः ।। ४.४३ ।।

एतन्मन्वन्तरे षष्ठिसहस्राणि भुजङ्गमाः ।
कर्द्रुजास्तेषु केचित्तु तात्विकाः शेषसेवकाः ।। ४.४४ ।।

अपरे कर्मजाजान स्तुल्यास्तत्पुत्रपौत्रकाः ।
सस्त्रीका मणिभूधन्याः महातल निवासिनः ।। ४.४५ ।।

महाविषाः महाघो(धा)राः कामरूपधराः खलाः ।
सरस्वत्यां सपत्नीकः कश्यपस्तप आचरथ् ।। ४.४६ ।।

तस्या विदूरे पत्नीनां भवनानि व्यचीक्ळपत् ।
उपयुक्तनतद्युक्तं तद्भृत्यास्तेषु चावसन् ।। ४.४७ ।।

कदाचिद्महिमवत्पार्श्वं वियाहि(विपाहि)पति मातरौ ।
गत्वा दृष्ट्वोच्चैश्रवसं नीलवालमहीप्रसूः ।। ४.४८ ।।

प्राहस्वच्छन्द विनताकद्रुते वचनं यदि ।
सत्यं दासी तवाहंस्यामन्यथात्वं ममेति च ।। ४.४९ ।।

अद्या सरात्रिश्च प्रातरिति ते गृहमीयतुः ।
तद्बालनैल्यवर्ण्ये तु सुतानाह च साधवः ।। ४.५० ।।

नैश्चन्तानलपद्वैह्वौ कालान्ना शोभवेत्तव ।
क्रूराहयास्तथाकृत्वा ता चक्रुर्मातृ किं करीं ।। ४.५१ ।।

शप्ताहयः शेषवाक्यात्स्वरुच्या(त्स्वस्त्र्याक्ष)क्षममात्मनः ।
ज्ञात्वा ददुर्जरत्कारोः सनाम्नीं भगिनीं मुनेः ।। ४.५२ ।।

स विरक्तोपि सन्तप्तैः निराश्यैर्नरकास्थितैः ।
पितृभिः प्रार्थितो गृह्णंस्तद्गर्भे त्वास्तिकं व्यधाथ् ।। ४.५३ ।।

तां त्यक्तुमूरौ सुष्टाप सा सन्ध्यार्थेव्यबोधयत् ।
निद्राभङ्गकरा गच्छेत्याहु तत्याज तां मुनिः ।। ४.५४ ।।

साग्रजं प्राप्य सुषुवे शिखायज्ञोपवीतिनं ।
स आपदि स्मृतो यामीत्युक्तोगान्मातुलं प्रति ।। ४.५५ ।।

नैमिशं वासुकिः प्राप्य सुधाममृतमन्थने(ते) ।
शप्ता हीना तात्विकानो तेनात्यन्विप संमताः ।। ४.५६ ।।

तक्षकः शृङ्गिशापेन व्यदशच्च परीक्षितं ।
शशास पृथिवीं तस्य सुतः स जनमेजयः ।। ४.५७ ।।

तदोदङ्को गालवस्य शिष्यः सेवा सुखात्मनः ।
दक्षिणामपि दास्यामीत्युक्तः स कुपितोऽदिशथ् ।। ४.५८ ।।

असाध्य पौष्यभार्यायाः राज्ञा देहि सुकुण्डले ।
इत्युक्तोगात्पुरं तस्य मार्गे गोमयभक्षणं ।। ४.५९ ।।

कृत्वानाचाम्य राजानं दृष्ट्वा याचत्स्व भामिनीं ।
याचयेत्याह तां गेहे हेनायस्य शप्तुमारभथ् ।। ४.६० ।।

नृपं न शप मां ब्रह्मन्शुद्धः पश्यसि भामिनीं ।
तत आचम्य गत्वा तां दृष्ट्वा तां प्राप सङ्कुण्डले ।। ४.६१ ।।

साह पूर्वे तक्षकायेमादामाया च तेपि च ।
पतिव्रतानसंदृश्या(धृष्या)हन्तु(न्तुं)शक्रोहमादृ(गमद्र)तं ।। ४.६२ ।।

यतो भवेति तं प्राहगुरुभक्तं न मा स्पृशेत् ।
इत्युक्तौ याचितः पौष्याद्भुञ्जन्श्राद्धान्नगं कचं ।। ४.६३ ।।

दृष्ट्वा शत्भवान्ध(शपद्भान्ध)वस्त्वं इति सोप्यशपन्मुनिं ।
अपत्नी कोसीति राज्ये लोकस्यान्धोपि पश्यसि ।। ४.६४ ।।

इति दत्वा वरं विप्रो ययौ मार्गेथ तक्षकः ।
शिष्यो भूत्वा ग्रन्थिवाहः सोविशच्च रसातलं ।। ४.६५ ।।

मुनिश्च योगसामर्थ्यात्तत्रागान्नागमायया ।
अधोस्तुवधि(वेश्चि)वन्तस्य गोमूत्रं नेत्रयोर्व्यधाथ् ।। ४.६६ ।।

ततो पश्यन्नागराजो भियादात्कुण्डलद्वयं ।
तदादाय गुरोर्दत्वा क्रुद्धोगाज्जनमेजयं ।। ४.६७ ।।

तं प्राहत्वं वृथाजातो पितृमृत्युं न चावधीः ।
अहं मन्त्रप्रवक्तास्मि सम्भारान्छटयाश्चलं ।। ४.६८ ।।

विना शेषं सर्वलोकान्निर्भुजङ्गान्करोम्यहं ।
इत्युक्त्वा सर्पयागेन भुजङ्गान्शतकोटिशः ।। ४.६९ ।।

व्यहनच्छक्रमगमंस्तक्षकाद्या नचापतन् ।
ततो ऋषिः सहेन्द्रोत्र तक्षकः पततामिति ।। ४.७० ।।

तक्षकायसहेन्द्राय स्वाहेत्यजुहदाहुतिं ।

तदाकम्पत्स्वराण्णागाः अस्मरन्नास्तिकं मुनिं ।। ४.७१ ।।

सोभीत्या पूजितो राज्ञा ह्युदकेनापि चास्तिकः ।
स्वाभिप्रेतं तदोदकमाया च जनमेजयं ।। ४.७२ ।।

दास्येर्थितमिति प्रोक्ते देहि मातुलजीवनं ।
इति तक्षकपूर्वान्सः कालमृत्योर्व्यमूमुचथ् ।। ४.७३ ।।

साचोदकं समाधा(ध्या)य तक्षकादीन्वधोर्व्यधात् ।
यज्ञप्राप्य फलं राज्ञे दत्वा सर्पानथाशपथ् ।। ४.७४ ।।

अनागसं मादशध्वं नागसंस्मरणान्मम ।
अन्यथा वः शिरः शीर्णं भवेदिति ययौ मुनिः ।। ४.७५ ।।

विनता सेवयाखिन्ना गर्भं गर्भिण्यताडयत् ।
उरुपृष्ठेपुराजातानूरुपादविवर्जितान् ।। ४.७६ ।।

स्वाशक्तिं कालतो दास्य प्राज्ञांरभगर्भविपं ।
प्रोक्त्वा मातुर्ययौ यान्ता सूर्यस्यासरथस्थितः ।। ४.७७ ।।

सौदामिन्यां सुतौ तस्य द्वौ सम्पातिजटायुषौ ।
कालेन गरुडो जातो विष्णोर्वाहो बभूव ह ।। ४.७८ ।।

पितुर्वाक्याद्बलप्राप्त्यै बभक्ष गजकच्छपौ ।
गन्धमादनगो पूर्वं गन्धर्वौ शापसम्भवौ ।। ४.७९ ।।

कद्रूतमाहात्मसुतान्प्रति पीयूषदोसिचेत् ।
दास्यान्मोक्षे मातरं च इत्येपास्तु न चाधिकं ।। ४.८० ।।

इत्युक्तोऽमृतमादाय प्रादात्तर्गाद्ध्यमोचयत् ।
दास्यात्स्वमातरं स्वर्गगतवच्चं सुरेश्वराः ।। ४.८१ ।।

प्राक्षिपतृणवतं च विधूय च सुधां पुनः ।
शक्रोयदाप च स्वर्गं(शक्रायदादापसख्य) तस्य कर्द्रुमथावदथ् ।। ४.८२ ।।

कुतोमृतं हृतमिति पृष्टे हि विनतासुतः ।
माता त्वया वञ्चिता मे मया त्वं तेन वञ्चितः ।। ४.८३ ।।

देहीत्युक्त्वा सुधां पाययेति नोक्तमतो(ह्य)धृतं ।
तदादि गरुडः सर्पान्वञ्चकान्हन्तुमारभथ् ।। ४.८४ ।।

कर्दुर्हिस्वोत्तमाद्रोहात्पुत्रशोकातुराभवत् ।
वञ्चकास्ते पतन्यज्ञे तदन्ये गरुडाशिनः ।। ४.८५ ।।

तदुत्थितास्तस्य करं दत्वा जीवन्ति कृत्स्नशः ।
कोवा निरागसानुसर्धूगृध्यजीवितुमुत्सहे ।। ४.८६ ।।

इहामुत्रापि दुःखं ते योग्या अपि भवन्ति हि ।
किमयोग्या राक्षसास्तु विशन्ति तम ऊर्जितं ।। ४.८७ ।।

एवं शेषस्य सामीप्यसेवायामृतपानतः ।
सख्यात्गरुत्मतः श्रीशभक्तितो गुरुभक्तितः ।। ४.८८ ।।

निष्कापट्यादास्तिकस्य वरतः शक्रदासतः ।
मातुः शापं तृणीकृत्य सुखमापुः स पन्नगाः ।। ४.८९ ।।

किमलभ्यं जगत्यस्ति विष्णुवैष्णवसेवया ।
महातले तु(कु) सर्पाणां स्थानं विपति बिभ्रतं ।। ४.९० ।।

शिवस्य वरतोन्येषु चरन्तो यान्ति दुर्(गर्)मतिः ।। ४.९१ ।।

इति श्री प्रकाशसंहितायां द्वितीयपरिच्छेदे चतुर्थोऽध्यायः

# प्रकाशसंहिता/द्वितीयपरिच्छेदः/अध्यायः ५



---

श्रीभगवानुवाच

रसातलेधस्थाद्दानवाः शतकोटिशः ।
दैत्याश्च यातुधानाश्च पौलोमाः कालकेयकाः ।। ५.१ ।।

निवाताकवचाधीराः राक्षसाश्च सुराणकाः ।
पिशाचा अन्त्यजासृक्याः महाकुमति(मुदि)नो जराः ।। ५.२ ।।

वसन्ति चक्रभयतो हरेः सर्वभयादपि ।
ये केचित्तात्विकास्तत्र संवसन्ति सुरर्षभाः ।। ५.३ ।।

प्रतिमन्वन्तरेष्वेते वर्षेस्मिन्भारतेखिलाः ।
हरीरसुरसद्विप्रगोयोषिदपराश्रमान् ।। ५.४ ।।

दूषयित्वा पातयित्वा केचित्पूर्णान्यथाधियः ।
नित्ये वसन्ति नरके हता हर्यादि दैःद्वग्द्ध ।। ५.५ ।।

नित्यदुःसाधनाभूयो रसातलमुपाश्रिताः ।
भूमौ भूत्वा ब्रह्मरुद्रवरैर्लोको(का)पकारिणः ।। ५.६ ।।

सर्वावतारै रामेण कृष्णेनापि हताः खिलाः ।
वसन्ति नित्यनरके कालाद्यास्यन्ति वै तमः ।। ५.७ ।।

तस्मिन्हि सरमानाम्नी शुनी ब्रह्मवरोद्भवा ।
सदार्तान्भीषयन्ति दैत्यान्यमस्य वशवर्तिनी ।। ५.८ ।।

क्षीणायुषस्तत्रदैत्याः स्वप्ने दृष्ट्वा सुदर्शनं ।
मृतायास्यन्ति नरकं तद्वंश्या(स्या)नां स आश्रयः(मः) ।। ५.९ ।।

तदधस्तात्तु पाताले उत्तरे दिशि भासुरे ।
सहस्रवदनः शेषः सर्वैस्तात्विकपन्नगैः ।। ५.१० ।।

समस्त नागकन्याभिः पूजितो रत्नमण्डपे ।
ध्यायन्नारायणं देवं सदावसति सामरः ।। ५.११ ।।

सहस्रभानुभादीप्यत्किरीटावलिमण्डितः ।
सम्पूर्णशारदशशिछविकोट्यधिकद्युतिः ।। ५.१२ ।।

नित्यामृतस्रवच्छुभ्रफणामण्डलमण्डितः ।
सदैककुण्डलो भास्वन्मुसलः सहलः प्रभुः ।। ५.१३ ।।

भानुप्रभामुण्मूर्धन्यमणिश्रीहृतसर्वरुक् ।
हारनूपुरवलयकङ्कणाङ्गुलिकादिभिः ।। ५.१४ ।।

अनेकमणिसद्भास्व(त्कटि)त्किरीटसूत्रादिकः प्रभुः ।
सुरासुरकिरीटस्थरत्नाछादितपादुकः ।। ५.१५ ।।

गन्धमाल्यादिसुरभिध्यायन्नास्ते विराट्स्वयं ।
पातालदक्षिणे भागे संय(म्य)मिन्यां पुरः प्रभुः ।। ५.१६ ।।

श्यामलावल्लभो दण्डधरो महिषवाहनः ।
समवर्ती यमः प्रेतपतिः नीलाञ्जनाद्रिरुक् ।। ५.१७ ।।

सर्वाभरणसम्पन्नः धर्मराट्रामचिन्तकः ।
भानुपुत्रोश्चात्रचित्रचित्रगुप्तौ सुलेखकौ ।। ५.१८ ।।

यस्याज्ञाया भारतोत्थपुण्यपापचयस्य तु ।
तत्र धर्मः प्रवक्तारः तत्तन्मन्वन्तरस्थिताः ।। ५.१९ ।।

ऋषयः सर्वदेवोपदेवास्तत्परिचारकाः ।
ऊर्ध्वकेशा विरूपाक्षाः नीलवर्णभयङ्कराः ।। ५.२० ।।

तदाज्ञाकारिणास्तस्य किङ्कराः पाशपाणयः ।
निष्ठुराः निर्घृणाः क्रूराः महापरिघपाणयः ।। ५.२१ ।।

भारतात्पापिनो बध्वाह्यानीयन्ते यमान्तिकं ।
दशलक्षमतास्ते तु घोरास्ताडनभर्जनैः ।। ५.२२ ।।

घोराध्वाने कृषन्त्येते नितरां कृतपापिनः ।
स तानभ्यगतान्दृष्ट्वा यमदण्डं परेतराठ् ।। ५.२३ ।।

तेषां मूर्ध्नि स्थापयति यातना देहिनां तदा ।
पुण्यपापानि ते सर्वे कीर्तयन्ति कृतानि च ।। ५.२४ ।।

तत्र तत्वात्मिकाःसर्वे सत्यमित्यवदन्स्थिताः ।
पत्रेषु तानि(ळःइ) लिखितान्यपि ते प्रपठन्ति च ।। ५.२५ ।।

सुखदुःखात्मकफलं वदन्ति ऋषिसत्तमाः ।
दशलक्षमितास्तेषां यमदूतास्तु नारके ।। ५.२६ ।।

पातयित्वा ताडयन्ति यथा पापानुसारतः ।
विंशल्लक्षमितास्तत्र(स्य) सदा रोगाभिमानिनः ।। ५.२७ ।।

ते वातपित्तश्लेष्माद्याः सन्निपातज्वरादयः ।
भगन्दरातिसाराश्च वमनारुचिदुर्व्रणाः ।। ५.२८ ।।

हेमपीनसबाधर्यद्धृ(हृ)द्रोगाद्यास्तदन्तिके ।
वसन्ति पापफलदाः क्वचिद्देहक्षयङ्कराः ।। ५.२९ ।।

श्वाहिवृश्चिकदंशांशी विषदुर्वृकरूपकाः ।
विंशल्लक्षास्तु नरके पतितानां प्रबाधकाः ।। ५.३० ।।

पाताले संवसन्त्येते नरका बहुरूपकाः ।
दुर्गतिर्निरयश्चैव महारौरवरौरवौ ।। ५.३१ ।।

संघातकालसूत्राख्योवर्चाख्यामनिरोधनं ।
तैलयन्त्रस्तप्ततैलो गिरिपातायसालयौ ।। ५.३२ ।।

सूच्यग्निभूरिनिर्घातौ वक्रकण्टकदानवौ ।
श्वभोजनव्रतपनौ कर्कशालिमुखोल्बणौ ।। ५.३३ ।।

पूयासृङ्मूत्रविष्टाशाः तप्तास्त्रोपरिरम्भणाः ।

कालकूटाग्निशकलौ सर्वशस्त्रास्त्रपातनौ ।। ५.३४ ।।

प्राणरोधमहाभारौ क्रूराशीविषवृश्चिकौ ।
सर्वाङ्गछेदात्ममांसौ तप्तवृक्षाभिपातनौ ।। ५.३५ ।।

शूलारोहापकर्षा द्वौ दुर्गन्धा राक्षसादनः ।
बाणाघातो वैतरणी शङ्कमूलकरालकौ ।। ५.३६ ।।

पिपीलिका जलूकादौ गृध्रकङ्कादि भोजने ।
आवर्तनास्फालनौ द्वौ शिलायन्त्रशिलादनौ ।। ५.३७ ।।

कर्णवस्तु पुपूर्णार्(णो) च द्वार(प्रक्षे)क्षेपणबन्धनौ ।
शृङ्कला तप्तसिकता स्फुलिङ्गाश्वावधूलयः ।। ५.३८ ।।

शिरमर्मग्रन्थिकूटजलनीरोधनादयः ।
सन्त्येवाष्टोत्तरशतनरकाः पातकालयाः ।। ५.३९ ।।

अनित्यनरका एते तामिश्रन्धतामिश्रकौ ।
नित्यौ द्वौ नरकौ तत्र गतायान्ति तमः क्रमाथ् ।। ५.४० ।।

अधो लोकेषु ये देवाः सर्वमन्वन्तरेष्वपि ।
प्रोक्तव्यापारनिरताः नामान्तरविवर्जिताः ।। ५.४१ ।।

अयोग्यानामिहप्रोक्तनामरूपाणि सर्वशः ।
इहैव पूर्वमनुषु(ष्टु) दत एवाज्ञ(म्य)नामकाः ।। ५.४२ ।।

एते मनुलये सर्वेत्यक्त्वा स्थूलानि सूक्ष्मतः ।
स्वप्राज्ञवशगा यान्ति महर्लोकं तदत्यये ।। ५.४३ ।।

प्राप्यस्थूलानि ऋषिभिः स्वपूर्वं पातिके(प्रान्तिके) क्रमाथ् ।। ५.४४ ।।

इति श्री प्रकाशसंहितायां द्वितीयपरिच्छेदे पञ्चमोऽध्यायः

# प्रकाशसंहिता/द्वितीयपरिच्छेदः/अध्यायः ६





---

श्रीभगवानुवाच

अतलाद्या सप्तलोकाः बिले स्वर्गाः प्रकीर्तिताः ।
मेरोरधस्तात्ते सर्वे प्रायशो ज्ञानि सङ्कुलाः ।। ६.१ ।।

एषामुपरि भूलोकः सर्वलोकतमो मतः ।
तस्मिन्हि भारते वर्षे बर्हिष्मत्ताख्यपत्तने ।। ६.२ ।।

शतरूपापतिः पूर्वं मनुः स्वायंभुवोऽभवत् ।
देवदासानेककोटिसेविताङ्घ्रिसरोरुहः ।। ६.३ ।।

शशास मेदिनीं एतां प्रजाङ्योरसवत्सदा ।
देवहूतिस्तु तत्पुत्री क्वचिद्धर्म्यगता भवथ् ।। ६.४ ।।

तां दृष्ट्वा संगनोभूमौ गन्धर्वाधीश्वरोऽपतत्(भवत्) ।
रूपयौवनसम्पन्नां तामारोप्य रथे स्वयं ।। ६.५ ।।

भार्यया सह तत्रागात्सरस्वत्यां तटं प्रति ।
तत्र बिन्दुसरस्तीरे तपतः कर्दमस्यतां ।। ६.६ ।।

पुण्याश्रमं प्रदत्वात्तु मनुः कृछ्रात्स्वकं पुरं ।
गते राजनि सा देवी वस्त्राभरणसञ्चयं ।। ६.७ ।।

नद्यां प्रास्य विरक्तस्य चीर्णवेणाजिनाम्बरा ।
व्रतक्षामापर्यचरत्पतिं भक्त्या जटाधरा ।। ६.८ ।।

इत्थं तया सेविताङ्घ्री राजपुत्रीमभाषत ।

हितं वदेति सा देवी(वव्रे) तं तु योगप्रभावतः ।। ६.९ ।।

संयोजनायामुमुद्यद्रविरक्त(त्न)प्रभान्वितं ।
सर्वोपस्करणोपेतं पक्षिवृक्षजला(समा)कुलं ।। ६.१० ।।

सौवर्णं कालगमतं सुगन्धि सुमनोहरं ।
स्वयं तदाहृदे स्नात्वा बभौ सर्वमनोहरः ।। ६.११ ।।

सापि श्रीरिव सौन्दर्यवस्त्राभरणभूषणैः ।
तुष्ट्वा स सतया सार्धं रेमेब्दशतकं ऋषिः ।। ६.१२ ।।

मेर्वादिषु चरन्दिव्यविमानस्थः समुक्तवत् ।
सुशब्दस्पर्शसुरसरूपगन्धमनोहरः ।। ६.१३ ।।

निन्ये कालं क्षणमिव कुसुमाकरवायुभिः ।
इत्येनं(रत्येत)बिन्दुसरसस्तीर आसन्नवाङ्गनाः ।। ६.१४ ।।

तत्पुत्रिकानां नामानि श्रुणु मे वदतः सदा ।
कलानसूया श्रद्धा च हविर्भूश्च गतिः क्रिया ।। ६.१५ ।।

अरुन्धती च चित्तिश्च ख्यातिः कर्दमपुत्रिकाः ।
कलां मरीचये प्रादादनुसूयामथा त्रयी ।। ६.१६ ।।

श्रद्धामङ्गिरसे प्रादात्पुलस्त्याय हविर्भुवम्(भुवि) ।
पुलहाय गतिं प्रादात्क्रतवे सक्रियां सुतां ।। ६.१७ ।।

अरुन्धतीं वसिष्ठाय चित्तिं च भृगवेर्पयत् ।
अथर्वणाय च ख्यातिं दत्वा हृष्टो बभूव ह ।। ६.१८ ।।

ततः शताब्दं चिक्रीड्य ततोस्यां कपिलं व्यधात् ।
स कर्दम तपोयोगात्साक्षान्नारायणो भवथ् ।। ६.१९ ।।

त्यक्त्वा विमानं भार्यां च कर्दमस्तपसे ययौ ।
औत्पत्तिब्रह्मचारी तु तस्मिन्बिन्दुसरस्तटे ।। ६.२० ।।

स्वमात्रे कपिलस्तत्वमुक्त्वामुक्तिं ददौ मुनिः ।
तत्तत्वं कपिलोपाख्यं कर्मग्रन्थिनिकृन्तनं ।। ६.२१ ।।

मरीचेः कश्यपो जज्ञे इह वैवस्वतान्तरे ।
पुनर्जातस्य दक्षस्य त्रयोदशसुतासु सः ।। ६.२२ ।।

कश्यपाय प्रदत्तासु दित्यादित्यादिकासु च ।
पूर्वोक्तास्तनया आसन्पूर्वमन्वन्तरेषु सः ।। ६.२३ ।।

कश्यपो नाम भेदेषु मरीचेस्तनयो भवत् ।
अन्यस्यामपि भार्यायां दक्षजाः षष्ठिकन्यकाः ।। ६.२४ ।।

प्रतिमन्वन्तेरेष्वासुः कश्यपाय त्रयोदश ।
दत्तास्यासुर्नामभेदेन ता जाताः सुरासुराः ।। ६.२५ ।।

पूर्वोक्ता नामभेदेन स्वस्वव्यापारसाधकाः ।
अस्मिन्कश्यपनामासीद्भार्यापुत्रादयोधुना ।। ६.२६ ।।

प्रोक्तव्यापारनामानः पूर्ववद्भावि कालके ।
स तात्विक ऋषिप्रोक्तपुष्कराच्च शतावराः ।। ६.२७ ।।

अजास्य दक्षतनयाः पूर्वमन्वन्तरेषु च ।
सप्तविंशति संख्याकाः इन्दोर्भार्या बभूविरे ।। ६.२८ ।।

अश्विन्याद्यास्तारकास्ते कालचक्रप्रवर्तकाः ।
सरोहिण्यां पक्षपातादन्यासु विपरीतदृक् ।। ६.२९ ।।

दक्षशापादसन्तानाः सर्वमन्वन्तरेष्वपि ।
भूताङ्गिरकृशाश्वेभ्यो द्वे द्वे दत्ते च भानुजाः ।। ६.३० ।।

भानुनां नक्षत्राणां मनुजः--------- ।
दत्ताश्वतश्रो दक्षाय दशधर्माय तासु वै ।। ६.३१ ।।

बभूवुस्तनयाः प्रायो ज्ञानभक्त्यादिमानिनः ।
अत्रिनेत्रोद्भवश्चन्द्रः सर्वमन्वन्तरेष्वपि ।। ६.३२ ।।

वृक्षाणामौषधीनां च नक्षत्राणां च वल्लभः ।
निशाकरो हिमकरस्तपहृत्सुखदःसदा(कृत्सदा) ।। ६.३३ ।।
(निराशकरो ?)

अमृतांशोसदन्नेशो ह्यब्दिजः श्रीसहोदरः ।
एधमान कलानाथः शशाङ्को लोकबान्धवः ।। ६.३४ ।।

अनसूयासुतावत्रे दत्तदूर्वाससावुभौ ।
योगप्रवर्तको योगाद्ब्रह्मण्यौ ब्रह्मचारिणौ ।। ६.३५ ।।

दत्तो नारायणःसाक्षात्दूर्वासाः शङ्करांशकः ।
संचण्डकोपः पृथया पूजितो मनुमादिशथ् ।। ६.३६ ।।

तेनैव कर्णधर्मादीन्त्रीनसूत सुपूजिता ।
सोम्बरीषादल्पशिष्टद्वादश्यां भोजनेर्थितः ।। ६.३७ ।।

ओमित्युक्त्वा तु कालिन्द्यां मग्नो नागाच्चिरं नृपः ।
विप्राज्ञयाम्भसा चक्रे पारणं साधनेच्छया ।। ६.३८ ।।

तज्ञात्वाथादिशत्कृत्यं राज्ञे सोप्यस्मरधरिं ।
पूर्वमाप्तं हरेश्चक्रं कृत्यां हत्वा विभीषयथ् ।। ६.३९ ।।

स ऋषिः सर्वलोकेशैः विष्णुना च निराकृतः ।
अम्बरीशं प्राप्य तेन मोचितो भोजितोभ्यगाथ् ।। ६.४० ।।

स दूर्वासाः रामकृष्णौ प्राप्य कृष्णामयाचत ।
सद्योन्नं दीयतामह्यं इति तैस्तुष्ट आव्रजथ् ।। ६.४१ ।।

श्रद्धयामङ्गिराः प्राप गुरुमग्निमुचथ्यकं ।
संवर्तकाग्नितनयाः प्रागुक्ताश्च गुरोरभूथ् ।। ६.४२ ।।

भूमावुचथ्यभार्यायां अन्तर्वर्तिरिरंसतः ।
गर्भस्थदीर्घतपसः पादाच्छन्नेभगे भुवि ।। ६.४३ ।।

पतिताद्रेतसो जातो मुनिः परमधार्मिकः ।
भरद्वाजो मरुद्भिः स पालितोभूत्पुरा किल ।। ६.४४ ।।

वैवस्वतेन्तरे चन्द्रवंशे भरतनामके ।
निःसन्ताने सति तदा मरुतस्तस्य तं ददुः ।। ६.४५ ।।

स उदूसत्प्रचुतुत्वन्तुमुत्थाप्य च विसृज्यतान् ।
पुनस्तपोचरद्धीर्घकालं भरतवंशजे ।। ६.४६ ।।

शन्तनौ श्याशितजगद्गङ्गायां चरतस्तपः ।
भरद्वाजस्कन्नमूर्वशी दर्शनादनु ।। ६.४७ ।।

रेतो दधार द्रोणी(णे) सः तस्माद्रोणो भवद्गुरुः ।
तस्मात्कृपी शङ्करांशमश्वत्थामा समाप हि ।। ६.४८ ।।

बृहस्पतेस्तु ताराभ्यां कच आसीत्सुतः पुरा ।
वैवस्वतेन्तरे सोभूच्छुक्रशिष्यः तपोनिधिः ।। ६.४९ ।।

निषिद्धा तेन सा विद्या नस्यात्त इति शासयत् ।
कामातुरापतिर्मास्तु तानि वेत्य(त्थ ?) शपन्मुनिः ।। ६.५० ।।

मृतसञ्जीविनीमाप तेनयातास्ततः क्वचित् ।
देवयानीं गुरुसुतां वने तद्योगमैच्छत ।। ६.५१ ।।

सह विध्य(द्य ?)स्तु शिष्येतो भर्तातेस्तु द्विजेतरः ।
इत्याहातो कविप्रोक्तशिष्येष्वप्यधिकं भवेथ् ।। ६.५२ ।।

देवया(धा)नी ह्रदे पुत्र्याराज्ञावेदषयघर्षणः ।।
निक्षिप्ता शुक्रशिष्यस्य तयाम्बुक्रीडनेतरा ।। ६.५३ ।।

स्ववस्त्रधारणादात्मक्षिप्तया दुःखिताभवत् ।
ह्रदेऽव सद्देवयानी राजकन्याहृताम्बरा ।। ६.५४ ।।

गतायां राजनन्दिन्यां पुरतः समुपागतः ।
ययातिश्चन्द्रवंशोत्थो मृगयार्थं तदाचरथ् ।। ६.५५ ।।

तां विवस्त्रां समुधृत्य स्वोत्तरीयं ददौ नृपः ।
तं धृत्वा सा गृहं प्रापराजागात्स्वपुरं तदा ।। ६.५६ ।।

तदर्थं कुपितं शुक्रं राजानत्वा प्रसाद्य च ।
गुरोः सुतायै स्वसुतां दासीत्वेऽकल्पयन्नृपः ।। ६.५७ ।।

शुक्रो ययाति नृपतेः कन्यां स्वां प्रददौ मुदा ।

दास्या शर्मिष्टया युक्तां दासी राज्ञे भवेत्सती ।। ६.५८ ।।

यदुःसुतो देवयान्यां तद्वंशः कृतवीर्यजः ।
अर्जुनो यो दशग्रीवं निगृह्य पुनराप तथ् ।। ६.५९ ।।

हृतो दत्ताविताेबाहुसहस्रयुगपि स्फुटं ।
तद्वंशजाप्सरसुताद्वसुदेवादभूधरिः ।। ६.६० ।।

इति श्री प्रकाशसंहितायां द्वितीयपरिच्छेदे षष्ठोऽध्यायः